श्रीवेङ्कटेश्वरप्राच्यग्रन्थमाला. सं ५८

साधारणसम्पादक - श्री. जी. चेन्नारेड्डि, [illegible]

श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयाध्यक्षः तिरुपति.

सुकविसहृदयनलञ्जन विद्वन्मणिना

श्रीमता - सौजन्यभूषणकवेरनुजवरेण

विरचितः

"काव्यादर्श" अपरनामधेयः

# रसविवेकः

(रसस्वरूप - तदधिकरण - तद्विभागादि निरूपणपरः)




अपूर्वोऽयं ग्रन्थः

विस्तृतभूमिकया, पाठान्तरविवेचन - विविधपरिशोधनांश - अनुबन्धादिभिस्साकं

इदम्प्रथमतया

श्रीवेङ्कटेश्वरसंस्कृतमहाविद्याशालायां न्यायदर्शनविभागस्य प्रधानाचार्येण,

श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालये च सम्प्रदायग्रन्थसम्पादनकर्मण्यधिकृतेन,

साहित्य - न्याय - वेदान्तशिरोमणिना उभयवेदान्तविदुषा

श्रीमता ति. कु. वें. न. सुदर्शनाचार्येण

सम्पादितः

श्री तिरुमल तिरुपति देवस्थानाधिकारिभिः सप्रमोदं प्रकाशितश्च

विजयते तमाम्

श्रीपदपुरी

श्री सिंह (दुर्मुख) संवत्सरः

श्रीरस्तु

श्रीमते वेङ्कटेशाय नमः

# विषयानुक्रमणिका

(CONTENTS)

(९) रसविवेकः, (१०) प्रतिपाद्यविषयसंग्रहः, (११) अस्य ग्रन्थस्य वैशिष्ट्यम्, (१२) ग्रन्थस्यास्य लाभप्रकारः, तत्प्रकाशने समुत्साहहेतुश्च, (१३) एतद् ग्रन्थस्य मातृकाणां परिचयः, (१४) ग्रन्थकर्तृदेशकालादिविचारः, (१५) मुद्रणसमये संघटिता अनुपपत्तयः, (१६) कृतज्ञताया आविष्करणम्, (१७) मङ्गलाशासनञ्च ।

३. कोशान्तर पाठान्तराणि ( Readings in other M. S. S. ) :—

४. विषयसूचिका ( Detailed Contents ) :—

५. रसविवेकः ( Rasaviveka Text ) :—

६. अनुबन्धाः ( Appendice ) :—

(१) कारिकानुक्रमणिका

(२) उदाहरणश्लोकानां अनुक्रमणिका

(३) उदाहृतानां ग्रन्थानां, ग्रन्थकर्तॄणां च नामानि

(४) संवादीकृतानि प्राचीनानां सुभाषितानि

(५) शोधनिका च



# PREFACE

*Rasavivēka* or *Kāvyādarśa* is a small and valuable treatise presenting a Scientific analysis of the concept of *Rasa* in Sanskrit Rhetorical literature. The author of this work has shown striking originality and has wisely avoided the many controversial aspects in the treatment of the subject. This, to-gether with its brevity and simplicity of style, would make it an eminently suitable Text-Book for the student of Sanskrit poetics.

The work is divided into three *Ullāsas* or chapters:- the first रसस्वरूपनिर्णय - dealing with the definition of the concept of *Rasa*, the second रसाधिकरणनिर्णय - dealing with its location or field of *Rasa* experience and the third रसभेदनिरूपण - dealing with the classification of *Rasa* types. Unlike other similar works before and after it, this is devoted exclusively to *Rasa* delineation. As is usual in works of this kind, we find prose and poetry intervoven in the text. The author has cited several verses by others in support of his explanations, besides giving his own verses from his other work *Praśānthakalikā*, which however has not yet seen the light of day.

There is no mention of the author's name any-where in the work. The author however states that he is the brother of *Soujanyabhūṣaṇakavi*. The manner in which he refers to himself as "सौजन्यभूषणकवेरनुजत्वगर्वः"

should make it clear to us that *Soujanyabhūṣaṇa* was a great *Vidvat-kavi* in his days. But, unfortunately nothing is yet known about him or his family. In another passage, he pays homage to one *Dakshiṇāmūrti Sūri* who may well have been his own *Guru* or the *avatāra* of *Īsvara* bearing that name and usually revered as an *Achārya* in the *Advaita* system. Incidentally, this may lead us to infer that he was an *Advaitin* himself and probably also belonged to south India, chiefly assosiated with the *Dakshiṇāmūrti's cult.*

We have thus no means of knowing who the author of *Rasavivēka* is. The two verses begining with the words "प्रह्लादो विजयी" and "नित्यं पुण्यजनार्दनाय" found inscribed on the obverse of the first leaf of the M. S. S in the Madras Oriental M. S. S. Library, cannot be relied on for this purpose, because, it is not possible to say definitely, whether these formed part of the work itself.

The author seeks to establish that *Bhakti* is a distinct *Rasa* and has to be reckoned as such along with the other accepted *Rasa* categories. He holds also that *Bhakti* culminates naturally in *Sringāra* - a view which is in consonance with the *Vaishṇava* concept and embodeid in the *hymns* of the *Āḻwārs.* His analysis of *Sānta Rasa* is another important feature of this work. The style, even in the discussion of intricate topics, is simple and elegant.

The author frequently quotes *Sri Mammaṭa Bhaṭṭa* and *Bhavabhūti* in his work refering to them by special epithets like "*Kasmīrādhipati*" and "*Karuṇaprabhu*" respectively. He mentions also *Sri Bharatamuni*, *Ānandavardhana*, *Dhanañjaya* and *Dhanika*. Though closely following *Daśarūpaka* and *Avalōka* as he follows *Nātya Śāstra*, *Dhvanyāloka* and *Kāvyaprakāśa*, he criticises the first two works severely at several points. Several verses hitherto unknown have also been quoted in this work.

It may be noted that most of the illustrations in it are from ancient works; the latest of which are *Śilāśataka* of *Kshēmēndra* (1029-1061 A. D.) and *Vikramāṅkadēvacharita* of *Bilhaṇa* (1076-1101 A. D.). There are none from the comparatively later works. We may therefore conclude that the author lived most probably in the 13 th Century and not very much later than that date.

I should thank *Sri Mānavalli Rāmakrishṇa Kavi Gāru* M. A. the well known Telugu and Sanskrit scholar and linguist and editor of several rare and valuble works, who very kindly gave me his copy of the M. S S. of this work for my transcription and use in editing this work. He gave me also much valuble information and guidance in preparing it for publication.

I render thanks to the authorities of the T. T. Devasthanams and its Executive officer Sri C. Anna Rao B. A , for very kindly permiting its publication.

My thanks are also due to Sri P. V. Ramanuja swamy M.A, Ex. Director of S.V.O. Institute, for his advice and help in securing for me other copies of the M. S. S. of the work from the Tanjore and Trivandrum Libraries and to Sri J. Chenna Reddy M. A. B. ED. the present Director for his kind encouragement.

I must acknowledge here the assistance given to me in the collation of different manuscripts and the collection of the sources of illustrations etc ; by my dear students Mssrs Vidwan N. C. V. Narasimhāchārya Siromani and Vidwan E. Gopalakrishṇamāchārya Siromani, at present Lecturers in sāhitya and Vyākaraṇa respectively of S. V. O. College, with Maṅgalaśāsanams.

Finally I must thank the Staff of the T. T D. Press for their help in bringing out this publication, successfully.

Sri Venkateswara
Oriental Institute
TIRUPATI
9—9—1956

T. K. V. N. SUDARSANACHARYA,
*Editor.*



श्रीरस्तु
श्रीमते वेङ्कटेशाय नमः

# भूमिका

## मङ्गलाचरणम्

ओं नमो वेङ्कटेशाय जगन्मङ्गलभूमये ।
स्वशेषलोककैङ्कर्यशेषिणे तोषिणे स्वयम् ॥

श्रीवेङ्कटाद्रिशृङ्गाग्रविद्युद्विभ्रमलोकनैः ।
निस्सीममभिवर्धन्तां कविभावुकभूतयः ॥

औचित्योपनिषण्मार्गदर्शकौ तौ महाकवी ।
महर्षी व्यासवाल्मीकी सूर्याचन्द्रमसौ स्तुमः ॥

---

## कवीनां मङ्गलम्

" औचित्यबन्धनिष्यन्दसद्रसानन्दरूपिणे ।
अच्युताय नमस्तस्मै परमौचित्यचारिणे ॥ "

[औचित्यविचारचर्चायाम् — श्रीक्षेमेन्द्रः]

" वन्दे कवीन्द्रवक्त्रेन्दुलास्यमन्दिरनर्तकीम् ।
देवीं सूक्तिपरिस्पन्दिसुन्दराभिनयोज्ज्वलाम् ॥ "

[वक्रोक्तिजीविते — श्रीकुन्तकः]

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥

[काव्यप्रकाशे — श्रीमम्मटः]

अपूर्वं यद्वस्तु प्रथयति विना कारणकलाम्
जगद् ग्रावप्रख्यं निजरसभरात् सारयति च ।

क्रमात् प्रख्योपाख्याप्रसरसुभगं भासयति तत्
सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते ॥

[ध्वन्यालोकलोचने – श्रीमान् अभिनवगुप्तः]

---

## श्रुतिमङ्गलम्

देवीं वाचमजनयन्त देवाः तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥

[ऋग्वेदे ८-१००-११]

चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याँ आविवेश ॥

[ऋग्वेदे (३-८-१०) ४-५९-३]

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

[ऋग्वेदे १-१६४-४५, (२-३-२२) अथर्ववेदे ६-२५ २७-२६]

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥

[ऋग्वेदे ८-२-२३]

अगँहो मुचे प्रभरेमा मनीषा मोषिष्ठ दाव्ने सुमतिं गृणानाः ।
इदमिन्द्र प्रतिहव्यं गृभाय सत्यास्सन्तु यजमानस्य कामाः ॥

[कृष्ण यजुर्वेदे १-६- अन्तिमे]

ओं शान्तिश्शान्तिश्शान्तिः ।

---

## प्रमोदाद्याविष्करणम्

अयि, रसिकावतंसाः सहृदयशिरोमणयः !

मोदः ! प्रमोदः !! सम्मोदः !!!

महदिदं मोदस्य स्थानमस्माकं, यदद्य "रसविवेक" नामकोऽयं मञ्जुलतमो रसनिबन्धः, तत्रभवतां श्रीमतां दिव्यसन्निधौ सप्रश्रयमुपहारीक्रियते, भगवतः परमकारुणिकस्य सकललोककल्याणैककल्पतरोः श्रीमतः श्रीनिकेतनस्य सुभगशीतलेन करुणाकटाक्षवीक्षणेनेति । महत्तरं च प्रमोदस्थानमिदं यत्, साहित्यशास्त्रलक्षणग्रन्थेषु सर्वेष्वपि विशिष्टक्रमः, सकललोकसत्कविकाव्यतत्त्वोपनिषद्रहस्यभूतस्य अतिरमणीयस्य ध्वनिमार्गस्य, तत्रापि तिलकायमानस्य सकलप्राणिहृदयङ्गमस्य रसस्य निरूपणप्रवणोऽयं प्रबन्धः प्रकाशं नीयते सपरिकरबन्धमिदम्प्रथमतया, श्रीवेङ्कटेश्वरप्राच्यविद्यापरिशोधनालय — ग्रन्थमालायामिति ॥ महत्तमं च सम्मोदस्थानमिदं मङ्गलमयं, यदत्र सर्वाङ्गीणरमणीये सारसंग्रहरूपे लक्षणनिबन्धे - "रसस्य स्वरूपं, अधिकरणं, विभाग" श्चेति त्रयोऽमी परमंशाः चतुरश्रतया निरूप्यन्ते, महितमञ्जुलैर्मृदुमधुरैर्महतामुदाहरणैः, परित्यज्य शाखाचंक्रमणादिप्रकारानिति च ॥

हेम्नः पुनरामोदोऽयं, यल्लक्षणानुशासककोटिनिविष्टोऽयमुदारधीः, अतिकर्कशतर्कवाग्विभूषणप्रवरोऽपि, नितान्तं मधुरमञ्जुलमङ्गलकवितामृतरसस्यन्दि-परमकोमलसरससुभगवचनरचनाधुरीणः, सहृदयहृदयाम्बुजचमत्कारकरवर्णनासौभाग्यशाली कविवरः, दिगन्तविश्रान्तकीर्तेः सरसमधुमयमृदुलतमफणितिमणिनिकुरुम्बगुम्भस्य रसिकावतंसस्य श्रीमतः सौजन्यभूषणकवेरनुजवरोऽपीति ।

अतः, साहित्यविद्यानिबन्धेषु रसनिबन्धोऽयं सर्वथा विशिष्यत एवेति को वा न जानाति सचेताः पण्डितप्रवरः ? परं त्वयमतीव विस्मयावहो विषयः, यदयं शमदमाद्यात्मगुणविभूषितो ममताहङ्कारदूरगः क्वचिदपि स्वनाम केवलं न निर्दिशतीत्येव न, किं तु, स्वाग्रजस्य वा सम्माननीयस्य कविविद्वत्तल्लजस्य यं कञ्चन विशेषं, ग्रन्थादिकं वा किञ्चिदपि न सूचयतीति ।

---

# औचित्यबन्धो रसोपनिषत् साहित्यविद्या

सर्वप्राणिहृदयङ्गमायाः साहित्यविद्यायाश्चरितं तावदत्र किञ्चित् विवेचयामः ।

साहित्यविद्या हि औचित्यनिबन्धना रसोपनिषत् । निखिलजगदुदयविभवलयलीलस्य परस्य ब्रह्मणः पुरुषोत्तमस्य स्वरूप - स्वभाव - कल्याणगुणगणविग्रहविभूत्यादिकं सर्वं साक्षादवगमयन्ती, तत्परमपुरुषवरणीयताहेतुगुणपरमहितान्युपदिशन्ती, तत्परब्रह्मानुभवानन्दसाम्राज्यमाकलयति विशिष्टाधिकारिणां पुरुषधौरेयाणां, अनादिनिधना, आजानपावना च श्रुत्यन्तभागात्मिका शारीरकमीमांसाया मूलभूता सा भगवती परब्रह्मोपनिषत् । अस्थानस्नेहकारुण्यधर्माधर्मधीव्याकुल - स्वप्राणसख - पाण्डुतनयव्याजेन अनन्तसांसारिकयातनानिमग्न—सकलसंसारिचेतनसमुद्दिधीर्षया परमकारुणिकेन भगवता वासुदेवेन समुपदिष्टा भगवती गीतोपनिषच्च, तदपेक्षया चात्यन्तं सुसुलभा समुचितोदारमङ्गलगुणवृत्तापि, कांश्चिदेव यमनियमध्यानादिविशिष्टानुष्ठाननिष्ठागरिष्ठान् समुज्जीवयति, आनन्दयति च; न तु सर्वानपि प्राणिनः ।

ललितोचितसन्निवेशरम्या चेयं साहित्यविद्या रसोपनिषत्, "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति श्रुतिप्रतिपादितरीत्या निखिलजगदानन्दसम्पत्सम्पादनैकतानस्य रसस्वरूपस्य परस्य ब्रह्मणः सुभगरमणीयान् सर्वानपि कल्याणगुणविलासान् ललितललितैर्भावैरुल्लोककमनीयचमत्कारकारिण्या प्रक्रियया समभिव्यञ्जयन्ती, लोकोत्तररमणीयैर्विलासोल्लासैः तन्मयीभवनसम्पादनेन निबर्हयन्ती रजस्तमसी, निरवधिकां निरन्तरां च सत्त्वसम्पत्समृद्धिमादधाना, तत्कालविगलितवेद्यान्तरमतीन् विधाय सर्वानपि प्राणिनः, अलौकिकरसास्वादपुलकितस्वान्तान् निर्भरानन्दसम्मग्नसर्वावयवांश्च समाकलयति झगिति परमतिविचित्रया सरण्येति सर्वेषामपि सहृदयशिरोमणीनामतिरोहितोऽयं विषयः ।

"औचित्यबन्धस्तु रसोपनिष" दित्याहुर्जगदानन्दसम्पादका उचितज्ञाश्च श्रीमन्त आनन्दवर्धनाचार्याः । यथा —

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥ इति ।

## साहित्यविद्या अनादिसिद्धा

सैषा साहित्यविद्या अनादिकालादाजानपावना प्रवर्तत इति, भारतीयानामभिसन्धि । तत्रभवान् [1]कविराजो राजशेखरः साहित्यविद्यामेनां लोकोत्तरया सरण्या वर्णयति । यथा —

"अथातः काव्यं मीमांसिष्यामहे । यथोपदिदेश श्रीकण्ठः परमेष्ठिवैकुण्ठादिभ्यश्चतुःषष्ठये शिष्येभ्यः । सोऽपि भगवान् स्वयम्भूरिच्छाजन्मभ्यः स्वान्तेवासिभ्यः । तेषु सारस्वतेयः बृन्दयसामपि वन्द्यः काव्यपुरुष आसीत् । तं च सर्वसमयविदं दिव्येन चक्षुषा भविष्यदर्थदर्शिनं भूर्भुवस्वस्त्रितयवर्त्तिनीषु प्रजासु हितकाम्यया प्रजापतिः काव्यविद्याप्रवर्तनायै प्रायुङ्क्त । सोऽष्टादशाधिकरणीं दिव्येभ्यः काव्यविद्यास्नातकेभ्यः सप्रपञ्चं प्रोवाच । तत्र कविरहस्यं सहस्राक्षः समाम्नासीत्; औक्तिकं उक्तिगर्भः, रीतिनिर्णयं सुवर्णनाभः, आनुप्रासिकं प्रचेतायनः, यमकानि चित्रं चित्राङ्गदः, शब्दश्लेषं शेषः, वास्तवं पुलस्त्यः, औपम्यं औपकायनः; अतिशयं पराशरः; अर्थश्लेषं उतथ्यः, उभयालङ्कारिकं कुबेरः, वैनोदिकं कामदेवः, रूपकनिरूपणीयं भरतः, रसाधिकारिकं नन्दिकेश्वरः, दोषाधिकरणं धिषणः, गुणौपादनिकं उपमन्युः, औपनिषदकं कुचमारः' — इति; ततस्ते पृथक् पृथक् स्वशास्त्राणि विरचयांचक्रुः " इति महता संरम्भेण ।

उत्तरत्र च "उपकारकत्वात् अलङ्कारः सप्तममङ्गम्" इति यायावरीयः; ऋते च तत्स्वरूपपरिज्ञानाद्वेदार्थानवगतेः । यथा —

"द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥"

सेयं "शास्त्रोक्तिः" इति,

"सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्" इति यायावरीयः, गद्यपद्यमयत्वात्, कविधर्मत्वात्, हितोपदेशकत्वाच्च तद्धि शास्त्राणि अनुधावति" इति च ।

---

1. (यस्तु, तत्रतत्र भाषाविशेषे, तेषुतेषु प्रबन्धेषु, तस्मिंस्तस्मिंश्च रसे स्वतन्त्र, स कविराज )

किञ्च, "पञ्चमी साहित्यविद्येति यायावरीयः; सा हि चतसृणामपि विद्यानां निष्यन्दः" इति च। एवं साहित्यविद्यायाः सर्वातिशायित्वं, सर्वोपकारकत्वं च नैकविधैः प्रकारैरभिवर्णयति कामसुद्दण्डपण्डितमण्डलीमण्डनायमानः सर्वतन्त्रस्वतन्त्रः कविकथक-कण्ठीरवः श्रीमान् राजशेखरः ।

## साहित्यशब्दव्युत्पत्तिः

"सहितं रसेन युक्तं — व्यञ्जकतासम्बन्धेन विशिष्टम्; अथवा, हितेन निरतिशयप्रेमास्पदेन इतरेच्छानधीनेच्छाविषयेण रसेन सहितं - प्रतिपादकतासम्बन्धेन विशिष्टम्; तस्य भावः साहित्यम्" इति, "साहित्य" शब्दव्युत्पत्तिर्बहुधा प्रतिपाद्यते।

अपिच, हितं - पिहितं - आवृतं, तत्सहितम्; हितं - संनिहितम् · नेदिष्टम्; "हिरण्मयेन पात्रेण सत्यस्य पिहितं मुखम्" "तद्दूरे चान्तिके च यत्" इति च श्रुतेः। सद्भिः—महाकविभिः सम्यङ् निहितं - रक्षितं वा; तत्सन्निवेशेनैव महाकवित्वलाभात्; पिहितं - प्रेषितं साक्षात्परमानन्दरूपेण परमपुरुषेण वा; अवहितं निगृहीतेन मनसा ध्यातम्, प्राचेतसबादरायणप्रभृतिभिर्महर्षिभिर्वा; हितं—सुहितम्; निरुपाधिक-निरवधिकनिर्भरानन्दसमत्सम्पादकमिति भावः—इत्येवं अनन्ता व्युत्पत्तयः तैस्तैर्बुद्धिमद्भिः प्रतिभाबलात् प्रदर्श्यन्ते। आसु सर्वासु रसरूपः कश्चन जीवातुः पदार्थः परमनुवर्तत एव।

यद्यपि "साहित्य" शब्दो वाङ्मयादिष्वपि प्रयुज्यते, तथाप्यत्र लोकोत्तर-चमत्कारकारिरमणीयार्थशब्दसन्दर्भरूपं सत्कविकाव्यजातं, तल्लक्षणप्रबोधकं च रस-भावालङ्कारादिपरिकर्मितं साहित्यशास्त्रं ब्रह्मानन्दसब्रह्मचारिनिर्भरानन्दसन्धायकं च प्रति-पादयतीति विवेकः ।

अत्र कुन्तकः स्वकीयवक्रोक्तिजीविते साहित्यशब्दमेवं व्याख्याति लोकोत्तरया प्रक्रियया । यथा —

"शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि ।
अर्थः सहृदयाह्लादकारी स्वस्पन्दसुन्दरः ॥

उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः ।
वक्रोक्तिरेव वैदग्ध्यभङ्गी भणितिरुच्यते ॥

शब्दार्थौ सहितावेव प्रतीतौ स्फुरतः सदा ।
साहित्यमनयोः शोभाशालितां प्रति काऽप्यसौ ॥

अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः ।
मार्गानुगुण्यसुभगो माधुर्यादिगुणोदयः ॥

अलङ्करणविन्यासो वक्रतातिशयान्वितः ।
वृत्त्यौचित्यमनोहारि रसानां परिपोषणम् ॥

स्पर्धया विद्यते यत्र यथास्वमुभयोरपि ।

सा काऽप्यवस्थितिस्तद्विदाह्लादैकनिबन्धना ।
पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते ॥ " इति ॥

साहित्यसमये — विवक्षितार्थैकवाचक एव - शब्दः ; सहृदयाह्लादकारिस्वस्पन्दसुन्दर- एव च - अर्थः ; तादृशयोर्विलक्षणयोः शब्दार्थयोः स्वसम्पत्सामग्रीसमुदयेन या, परस्परस्पर्धित्वरमणीयसौन्दर्यश्लाघ्यतारूपा अन्यूनानतिरिक्तत्वमनोहारिणी काऽपि शोभा-शालिनी समवस्थितिः ; तत् साहित्यमिति अस्याभिप्रायः ॥

## काव्यपद्धतिः

" रसप्रधनाः शब्दार्था गुणालङ्कारवृत्तयः ।
रीतयश्चेयती शास्त्रप्रमेयं काव्यपद्धतिः ॥ "

इत्युक्तया रीत्या, वस्तु-अलङ्कार-रसरूपव्यङ्ग्यार्थप्रधानाः शब्दार्थाः, गुणाः, अलङ्काराः, वृत्तयः, रीतयः, शय्या — पाकादयश्च साहित्यविद्याया महितानि रमणीयानि चाङ्गानि ।

## काव्यशरीरम्

" शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम् ।
हारादिवदलङ्कारास्तत्र स्युरुपमादयः ॥

श्लेषादयो गुणास्तत्र शौर्यादय इव स्थिताः ।
आत्मोत्कर्षावहास्तत्र स्वभावा इव रीतयः ॥

शोभामाहार्यिकीं प्राप्ता वृत्तयो वृत्तयो यथा ।
पदानुगुण्यविश्रान्तिः शय्या शय्येव सम्मता ॥

रसास्वादप्रभेदास्स्युः पाकाः पाका इव स्थिताः ।
प्रख्याता लोकवदियं सामग्री काव्यसम्पदः ॥ "

इति प्रकारेण काव्यशरीरमभिवर्ण्यते कविसमयनर्ममर्मज्ञैरालङ्कारिकैः ।

तत्र च रस एव प्रधानप्राणो भवति काव्यशरीरस्य ।

## काव्यजीवितविचारः

काव्यजीवितविषये च विद्योतन्ते बहुविधा विप्रतिपत्तयः ।

### श्रुतिप्रक्रिया

"रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति " इत्यादिषु श्रुतिवाक्येषु " रस " एव काव्यजीवितेषु प्रधान इति समुपदिश्यते । तस्य च उपमादयः अलङ्कारा भवन्ति ।

अभ्रातेव पुंस इति प्रतीचीं गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषाहस्रेव निरिणीती अप्सः ॥

[ (ऋग्वेद १. १२४. ७)

द्वा सुपर्णा (ऋग्वेद ७–३३-८)
चत्वारि शृङ्गा ( " ४–५८-३)
रसो वै सः (तै० उप० )

इत्यादिषु श्रुतिवाक्येषु उपमा - रूपकाद्यलङ्काराः प्रतिपाद्यन्ते ।

भगवान् यास्कश्च — " अथात उपमा ; यदेतत्, तत्सदृशमिति गार्ग्यस्तदानां कर्म ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वा प्रख्यातं वा उपमीयते । अथापि कनीयसा ज्यायांसम् " इति निर्वक्ति ।

उपमितं व्याघ्रादिभिः सामान्याप्रयोगे (२-१-५६)
उपमानानि सामान्यवचनैः (४-१-५५)
अत एव चोपमा सूर्यकादिवत् (१-४-१ ) इत्यादिषु सूत्रेषु च तत्रभवान् पाणिनिरपि उपमां कीर्तयति ॥

## श्रीमतो भरतमुनेर्नाट्यशास्त्रप्रवर्तकस्य मतम्

भगवतः पितामहस्य चतुर्मुखस्य नियोगात्, सर्वप्राणिहृदयङ्गमं निखिलवेद-निष्यन्दसारं नाट्यशास्त्रं भाव - राग - तालादिभिर्जगदानन्दसम्पादकं अवतारयामास भगवान् भरतमुनिः। "रस" एव काव्यजीवितमिति तस्य भगवतो भरतमुनेर्नाट्य-शास्त्रप्रवर्तकाचार्यस्य अभिमतम्। गुणालङ्कारादयस्तु रसस्य उपस्कारका भवन्ति।

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति श्रीमतामाचार्यचरणानां रससूत्रम्। अस्य, भट्टलोल्लट - श्रीशङ्कुक - भट्टनायक - श्रीमदभिनवगुप्तपादादयः स्वस्वमतानुसारेण व्याख्या व्यरीरचन्। तत्रभवान् मम्मटः, स्वीये काव्यप्रकाशे, चतुर्णां व्याख्यानरीतिं सन्दर्शयति। श्रीमान् पण्डितराजो जगन्नाथस्तु, स्वीये रसगङ्गाधरे, रससूत्रस्यास्य एकादश मतानि अतिविशिष्टक्रमेण निरूपयन्, तत्तन्मतानुसारेण च सूत्राक्षराणि योजयति, व्याख्याप्रभेदक्रमानपि सम्यगुपदर्शयति च।

## अग्निपुराणम्

काव्यप्रकाशस्य आदर्शनामनि व्याख्याने महेश्वरः — "सुकुमारान् राज-कुमारान् स्वादुकाव्यप्रवृत्तिद्वारा गहने शास्त्रान्तरे प्रवर्तयितुं अग्निपुराणादुद्धृत्य काव्य-रसास्वादकारणमलङ्कारशास्त्रं कारिकाभिः संक्षिप्य भरतमुनिः प्रणीतवान्" इति अभि-वर्णयति। एवमेव विद्याभूषणोऽपि साहित्यकौमुदीव्याख्याने कृष्णानन्दिन्यभिधाने— "काव्यरसास्वादनाय वह्निपुराणादिदृष्टां साहित्यप्रक्रियां भरतः संक्षिप्ताभिः कारिकाभि-र्निबबन्ध" इति समुपवर्णयति। अतः, अग्निपुराणमेव नाट्यशास्त्रस्य मूलमिति ज्ञायते।

अग्निपुराणे — ३३६ तमाध्यायमारभ्य ३४६ तमाध्यायपर्यन्तं दशसु अध्या-येषु साहित्यविद्याङ्गानि सर्वाण्यपि प्रतिपाद्यन्ते। यथा — ३३६ तमे काव्यस्य लक्षणविभागादयः, ३३७ तमे नाटकप्रक्रिया, ३३८ तमे विभावानुभावसात्त्विकव्यभि-चारिनिरूपणेन साकं रसप्रक्रिया, ३३९ तमे रीतीनां च प्रक्रिया, ३४० तमे आङ्गिकाभिनयप्रक्रिया, ३४१ तमे चतुर्विधाभिनयप्रक्रिया, ३४२ तमे शब्दालङ्कार-प्रक्रिया, ३४३ तमे अर्थालङ्कारप्रक्रिया, ३४४ तमे शब्दार्थालङ्कारप्रक्रिया, ३४५ तमे

गुणानां प्रक्रिया. ३४६ तमे दोषाणां प्रक्रिया चेति, आहत्य ३६२ श्लोकेषु सम्पूर्णा साहित्यविद्या निरूप्यते ।

## भामहः — काव्यालङ्कारे

"अलङ्कारा एव काव्यजीवित" मिति श्रीमतो भामहस्याभिसन्धि । रस-भावादयोऽपि अलङ्कारेषु अन्तर्भाव्यन्ते । अयं तु काव्यालङ्कारे षट्सु परिच्छेदेषु शरीर - वक्रोक्त्याद्यलङ्कृति - दोषदृष्टि - न्यायनिर्णय - शब्दशुद्धिरूपाः पञ्चविषयाः प्रतिपादयति । यथोक्तम् —

"षष्ठ्या शरीरं निर्णीतं शतषष्ठ्या त्वलङ्कृतिः ।
पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः ॥

षष्ठ्या शब्दस्य शुद्धिस्स्यादित्येवं वस्तुपञ्चकम् ।
उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण च" इति ॥

साहित्यशास्त्रस्य "अलङ्कारशास्त्र" मिति व्यवहारः, एतदुपज्ञ एवेति भाति ।

## दण्डी — काव्यादर्शे

"गुणा एव कव्यजीवित" मिति सिद्धान्तयति श्रीमानाचार्यो दण्डी स्वीये काव्यादर्शे ।

"त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः ।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥"

इति, शार्ङ्गधरपद्धति (१७४ तम) श्लोकेन राजशेखरीयेण, अतिप्रसिद्धान् अमूल्यांश्च त्रीन् निबन्धानयं रचयामासेति ज्ञायते । तत्र काव्यादर्शः साहित्यविद्याङ्गानि निरूपयति । तत्र सन्ति त्रयः परिच्छेदाः । केचन चतुरः परिच्छेदान् निर्दिशन्ति, तृतीयं परिच्छेदं द्विधा विभज्य । तत्र प्रथमपरिच्छेदे - स्वरूपं, तद्विभागः, वैदर्भ-गौडरीती, दश गुणाः, काव्यहेतवः प्रतिभादयश्च निरूप्यन्ते, द्वितीये — स्वभावोक्त्यादयः पञ्चत्रिंशदलङ्कारा निरूप्यन्ते ; तृतीये यमक — चित्रबन्ध — प्रहेलिकादयः, चतुर्थे च — दश दोषाश्च निरूप्यन्ते ।

## उद्भटः – अलङ्कारसारसंग्रहे

"अलङ्कारा एव काव्यजीवित"मिति अस्यापि सम्प्रदायः। षड्वर्गभिन्ने अलङ्कार-सारसंग्रहे उद्भटः ४१ अलङ्कारान् निरूपयति। प्रतिहारेन्दुराजेन चास्य वृत्तिरल्लोक-कमनीयप्रक्रिया समारचिता। अत्रोदाहरणतया गृहीताः श्लोकाः सर्वे, उद्भटेनैव कृतात् कुमारसम्भवादुद्धृता इति वृत्तिकारोऽयं निर्दिशति। अयं भामहमेवानुसरति प्रधानतः।

## वामनः – काव्यालङ्कारसूत्रेषु

"रीतिरेवात्मा काव्यस्य" इति श्रीवामनभट्टस्य मतम्। अयं ग्रन्थः - सूत्राणि, वृत्तिः, उदाहरणानि - इति त्रिधा विभक्तः। अत्र पञ्च अधिकरणानि सन्ति। तत्र **प्रथमाधिकरणे – शारीरे** काव्यस्वरूप–प्रयोजनादिकं, वैदर्भी, गौडी, पाञ्चाली चेति तिस्रो रीतीश्च निरूपयति, **द्वितीये – दोषदर्शने** पदवाक्यादिदोषान्, **तृतीये – गुणविवेचने** गुणालङ्कारयोर्वैलक्षण्यम्, ओजआदिकान् दशगुणान्, **चतुर्थे – आलङ्कारिके** यमकानुप्रासौ, उपमां, तद्दूषणषट्कम्, इतरांश्च अलङ्कारान्, **पञ्चमे प्रायोगिके** च - कविभिरवधेयान् प्रयोगनियमांश्च निरूपयति।

"रीतिरात्मा काव्यस्य, विशिष्टपदरचना रीतिः; विशेषो गुणात्मा" इति सूत्रैः काव्यजीवितं मुक्तकण्ठमुत्कीर्तयति। "काव्यशोभायाः कर्तारो धर्माः — गुणाः, तदतिशयहेतवस्त्वलङ्काराः" इति गुणालङ्कारयोस्तारतम्यमपि सुस्फुटं निरूपयति।

## रुद्रटः — काव्यालङ्कारे

"अलङ्कारा एव काव्यजीवित" मिति अस्याभिप्रायः। षोडशाध्यायपरिमिलिते काव्यालङ्कारे आर्यावृत्तप्रचुरे साहित्यविद्याङ्गानि सर्वाणि निरूपितानि।

## आनन्दवर्धनाभिनवगुप्तौ – ध्वन्यालोकलोचनयोः

"ध्वनिरेव काव्यजीवितम्" इति अनयोराचार्ययोर्ध्वनिमार्गप्रवर्तकयोर्मतम्।

"ध्वनिनाऽतिगभीरेण काव्यतत्त्वनिवेशिना।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः॥"

इति, सूक्तिमुक्तावलिगतराजशेखरश्लोकेन आनन्दवर्धनस्य लोकातिशायिवैभवमभिवर्णितम्। चतुर्षु उद्योतेषु ध्वनिमार्गः सम्यग् व्यवस्थापितः। उत्तम - मध्यम - अधमभेदेन काव्यं त्रिधा विभक्तम्। वाच्यादतिशयिनि व्यङ्ग्यार्थे उत्तमम्, वाच्यादनतिशायिनि व्यङ्ग्ये गुणीभूतव्यङ्ग्यं मध्यमम्, व्यङ्ग्याद्वाच्येऽतिशायिनि अधमं चित्रम् - इति विवेकः सोदाहरणप्रविभागं सम्पादितः।

तदनन्तरकालिकाः सर्वेऽप्यालङ्कारिका अमुमेवानुसृत्य स्वग्रन्थान् व्यरीरचन्।

## कुन्तकः - वक्रोक्तिजीविते

"वक्रोक्तिरेव काव्यजीवितम्" इति कुन्तको वक्रोक्तिजीविते व्यवस्थापयति। "वक्रोक्तिरेव वैदग्ध्यभङ्गी भणितिरुच्यते" इति कारिकायाम्, "वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा वैदग्ध्यं कविकौशलं तस्य भङ्गी विच्छित्तिः" इति वृत्तौ च विशदयति।

"शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।
अर्थः सहृदयाह्लादकारी स्वस्पन्दसुन्दरः॥

साहित्यमनयोः शोभाशालितां प्रति काऽप्यसौ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः॥"

इति, शब्दार्थयोः साहित्यस्य निर्वचनमपि विशिष्टक्रमेणाभिवर्णयति।

## धनञ्जयधनिकौ – दशरूपकावलोकयोः

"रस एव काव्यजीवितम्" इति अनयोर्मतम्। चतुर्षु प्रकाशेषु प्रथमप्रकाशे – रूपकविभागः, पञ्चसन्धयः, सन्ध्यङ्गानि, विष्कम्भादीनां लक्षणानि च निरूप्यन्ते। द्वितीये — नायिकानायकविभागः, तत्सहायाः, चतस्रो वृत्तयः, तदङ्गानि, तृतीये — वस्तुनेतृरसानां नाटकादिषूपयोगः, पूर्वरङ्गप्रस्तावनातदङ्गादिकं च निरूप्यन्ते। चतुर्थे तु – रसः सपरिकरो निरूप्यते।

रसनिर्वचने च अनयोः प्रक्रिया विजातीया वर्तते। यथा — "न रसादीनां काव्येन सह व्यङ्ग्यव्यञ्जकभावः; किं तर्हि? भाव्यभावकभावः सम्बन्धः। काव्यं हि भावकम्, भाव्या रसादयः" इति।

## भोजः – शृङ्गारप्रकाश – सरस्वतीकण्ठाभरणयोः

"रस एव काव्यजीवित" मिति भोजस्याभिसन्धिः। सोऽपि रसः शृङ्गार एक एव भवितुमर्हति – इति शृङ्गारप्रकाशेऽतिविशिष्टे लोकोत्तरचमत्कारकारितया निरूपयति। पञ्चपरिच्छेदभिन्ने सरस्वतीकण्ठाभरणे च. पञ्चमे परिच्छेदे – साङ्गोपाङ्गो रसो निरूप्यते।

## क्षेमेन्द्रः – कविकण्ठाभरण – औचित्यविचारचर्चयोः

"औचित्यं काव्यजीवितम्" इति क्षेमेन्द्रस्य उद्दण्डपण्डितस्य अभिप्रायः।

"औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।
रसजीवितभूतस्य विचारं कुरुतेऽधुना॥

उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।
उचितस्य च यो भावः तदौचित्यं प्रचक्षते॥"

इत्यादिना ग्रन्थेन, पद - वाक्य - प्रबन्धार्थ - गुण - अलङ्कार - रस - क्रिया - कारक - लिङ्गवचन - उपसर्ग - काल - देशादीनां औचित्यमेव प्रधानतः काव्येषु परिपालनीयम् – इति वर्णयति।

"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा॥"

इति ध्वन्यालोके श्रीमद्भिरानन्दवर्धनाचार्यैः सारसंग्रहतया उक्तमर्थमयं सम्यग् विशदयति।

## मम्मटः – काव्यप्रकाशे

"व्यङ्ग्यवैभवमेव काव्यजीवितम्" इति सरस्वतीपुनरवतारभूतस्य, अस्य भट्टाचार्यस्य अभिप्रायः। दशसु उल्लासेषु साहित्यविद्याङ्गानि सर्वाणि निरूपितानि।

महाप्राज्ञोऽयं श्रीमद्भट्टाभिनवगुप्तमतं सर्वात्मना अनुसरति, भावप्रकाशनकारशारदातनय इव ।

" रसप्रधानाः शब्दार्थौ गुणालङ्कारवृत्तयः ।
रीतयश्चेयती शास्त्रप्रमेयं काव्यपद्धतिः ॥ "

इत्यनेन श्लोकेन निर्दिष्टा सर्वाऽपि काव्यपद्धति. अत्याश्चर्यकरया प्रक्रियया निरूप्यते काव्यप्रकाशेऽस्मिन् समग्रतया ।

(१) काव्यप्रयोजनं, काव्यहेतुं, काव्यनिर्वचनं, काव्यविभागं च प्रथमे,

(२) वाचक - लक्षक - व्यञ्जकभेदेन शब्दं, वाच्य - लक्ष्य—व्यङ्ग्यभेदेन अर्थं, अभिधा - लक्षणा - व्यञ्जनाभेदेन व्यापारं च द्वितीये,

(३) व्याञ्जनाया उपयोगं तृतीये,

(४) अविवक्षितवाच्य, विवक्षितान्यपरवाच्यादिध्वनिप्रभेदान्, रसस्वरूपं, स्थायिभाव - विभाव - अनुभाव - व्यभिचारिभावादीनां स्वरूपं, रसस्वरूपविवरणे मतभेदांश्च चतुर्थे,

(५) गुणीभूतव्यङ्ग्यं पञ्चमे,

(६) चित्रकाव्यानि षष्ठे,

(७) दोषविभागान् सप्तमे,

(८) गुणालङ्कारयोर्वैलक्षण्यम्, माधुर्यौजःप्रसादाख्यगुणत्रये इतरगुणानां अन्तर्भावं, केषाञ्चिद्दोषाभावत्वेन गुणत्वं च अष्टमे,

(९) शब्दालङ्कारान्, वृत्तीः, रीतीः, यमकश्लेषचित्रबन्धांश्च नवमे,

(१०) ६१ अलङ्कारान्, तद्दोषांश्च दशमे च, उल्लासे सम्यङ् निरूपयति ॥

## इतरे लक्षणकाराः

इत्येवं लक्षणग्रन्थेषु, अन्यत्र, रुय्यकस्य अलङ्कारसर्वस्वे, वाग्भटस्य अलङ्कारग्रन्थे, हेमचन्द्रस्य काव्यानुशासने, विद्याधरस्य एकावल्याम्, विद्यानाथस्य प्रताप-

रुद्रयशोभूषणे, वाग्भटस्य काव्यानुशासने, विश्वनाथस्य साहित्यदर्पणे च साहित्य-विद्याङ्गानि सर्वाणि निरूप्यन्ते ।

चन्द्रालोक – कुवलयानन्द – चित्रमीमांसादिषु अलङ्कारेषु प्रतिपाद्यमानेषु, भानुदत्तस्य रसमञ्जरी - रसतरङ्गिण्योः, अल्लराजस्य रसरत्नप्रदीपिकायां, भोज-राजस्य शृङ्गारप्रकाशे, पण्डितराज – जगन्नाथस्य रसगङ्गाधरे च रसस्वरूप - प्रवचन - प्रयोजन - प्रविभागादयो विषया विशिष्य निरूप्यन्ते ।

## रस विवेकः

तादृशेषु रसनिबन्धेषु तिलकस्थानीयोऽयं निबन्धराजो, रसविवेकः काव्या-दर्शापरनामा । अत्र त्रय एव उल्लासा वर्तन्ते । " तत्रासौ रसः किमात्मा, किमधि-करणः, कतिसंख्यश्चेति, त्रिविधो विचारः " इति क्रमेण त्रिष्वपि उल्लासेषु, रस-स्वरूपम्, रसस्य आश्रयः, रसविभागश्चेति, त्रयोऽमी विषयाः परं सप्रमाणोपपत्ति ससरसोदाहरणं, सरलगम्भीरया काव्यशास्त्रपद्धत्या, नवनवोन्मेषया भावपरम्परया च ससरससुभगरमणीयं निरूप्यन्ते ।

यद्यप्ययं प्रबन्धा, नाट्यशास्त्र - ध्वन्यालोक - दशरूपक - काव्यप्रकाशा-दीन्, न केवलमर्थतः, किंतु, शब्दतोऽपि साक्षाच्चुलकीकृत्य, स्वप्रबन्धं विरचया-मास ; प्रायशस्तत्तत्र समुदाहृतान्येव उदाहरणानि स्वयमपि समुदाजहार ; तथाऽपि, सरस्वतीहृदयारविन्दमकरन्दबिन्दुसन्दोहसुन्दरैः स्ववचनैरन्तरामोदमनोहारिणीं कामपि परमामनुभूतिं प्रसादयत्येव सहृदयहृदयषट्चरणानामिति, अनुभवरसिकानां अनुभवसाक्षि-कोऽयं परमार्थः । " प्रकोष्ठस्थितस्य कङ्कणस्य दर्पणं कुतो " वेति विस्तरशो विरम्य. सहृदयानां सम्मुखे तमिमं काव्यादर्शं संस्थापयामि । उपरि तत्रभवन्त एव प्रमाणम् ।

संवादितया, अन्यथा वा, तत्तद्ग्रन्थसमुदाहरणसमयेऽपि प्रदर्शयत्येवायं कामपि अपूर्वां वैदग्ध्यपरिपाटीम् । अपि च काव्यप्रकाशकारे श्रीमति मम्मटभट्टे, उत्तररामचरित-प्रणेतरि श्रीमति भवभूतौ च अस्यास्ति अनन्यसदृशमतिमहच्च गौरवम्, यतो हि कीर्तयति श्रीमन्तं मम्मटभट्टं " काश्मीराधिपतिं ", श्रीमद्भवभूतिं च " करुणप्रभुं " इतरविलक्षणतया । रसस्वरूपादिनिरूपणघट्टेषु च तत्रभवन्तं नाट्यशास्त्रप्रणेतारं

भरतमुनिं निरुपाधिकनिरवधिकादराभिमानप्रदर्शनपुरस्सरं निरुपाधिकतया ' मुनिः " इत्येवोत्कीर्तयति । कदाचित् " श्लोकौ " इत्यनेन नाट्यशास्त्रश्लोकावुल्लिखति । एवं, दशरूपकमपि तत्र तत्रानुवदति, परं तु कुत्रचित् तिरस्करोत्यपि ।

## प्रतिपाद्यविषयसंग्रहः

रसभावौ प्रशंसति च विशिष्टक्रमेण प्रथमत एवम् —

" जयति रसाख्यं तत्त्व सुहृदां स्वानन्दसंविदावेद्यम् ।
यदुदाहरन्ति कवयो ब्रह्मास्वादस्य नेदिष्ठम् ॥

जयति स भावो योऽसौ समस्तसञ्चारणैरुपायैस्तैः ।
श्रोतृप्रेक्षकवर्गं नायकवद्रसमयं कुरुते ॥ " इति ।

तथा सहृदयानपि —

" स्वानन्दसंविद्रूपस्य पुलकाङ्कुरसाक्षिणः ।
विरलाः खलु बोद्धारो रसस्य ब्रह्मणो यथा ॥ " इति ।

अन्वयव्यतिरेकाभ्यां काव्यसत्तासम्पादको रस एवेत्याह —

" यद्भाव - यदभावाभ्यां काव्याकाव्यत्वयोः पदम् ।
शब्दार्थौ रसतत्त्वं तत् स्वसंवेद्यं सतां मतम् ॥ " इति ।

अथ प्रथमे च उल्लासे — बुद्ध्यादिव्यतिरेकेण भावस्य सद्भावः, तदुत्कर्षरूपस्य रसस्य चर्व्यमाणत्वम्, तस्य च पुरुषार्थत्वम्, अन्तःकरणवृत्त्यपेक्षया च सुखस्य व्यतिरिक्तत्वम्, अलौकिकरसस्य सम्पूर्णा सामग्री, कार्यकारणसहकारिणां अनुभावविभावव्यभिचारिपदैर्व्यपदेश्यत्वम्, विभावादीनां त्रयाणां समुदितानामेव रसहेतुत्वम्, विभावानुभावव्यभिचारिभावशब्दानां व्युत्पत्तिः, तेषां विशेषाः, सात्त्विकभावानां वैशिष्ट्यं, व्यञ्जनावृत्तेरतिरिक्तत्वस्य, रसस्य व्यङ्ग्यत्वस्य च व्यवस्थापनम्, रसस्य दोषाः, रसादेर्वाक्यार्थत्ववादिनो दशरूपककारस्य मतखण्डनम्, रसानां असंलक्ष्यक्रमव्यङ्ग्यत्वसमर्थनम्, उत्तम - मध्यम - अधम भेदेन काव्यविभागप्रदर्शनम् — इत्यादयो विषयाः सप्रमाणोपपत्ति सोदाहरणं निरूप्यन्ते ।

द्वितीये च — अनुकार्य–नटादीनां अलौकिकरसाश्रयत्वं खण्डयित्वा, सामाजिकानामेव तदाश्रयत्वं व्यवस्थाप्यते सप्रमाणोपपत्ति ।

तृतीये तु — विकास, विस्तर, क्षोभ, विक्षेपरूप – चित्तवृत्तिविशेषभेदेन स्वादस्य भेदात् क्रमशः शृङ्गारादिरसभेदः, तत्र च, शृङ्गार - वीर - बीभत्स - रौद्रेभ्यश्चतुर्भ्यश्च क्रमेण हास्य - अद्भुत - भयानक - करुणरसाश्चत्वारः – इति, आहत्य, अष्टौ रसा भवन्तीति विवेच्यते ।

ततश्च, शान्तरसं प्रति विविधा विप्रतिपत्तीः प्रतिपाद्य, स्वमतेन निर्वेदस्थायिभावको विकासादिचित्तवृत्तिचतुष्टयजन्यः शान्तरसः सपरिकरबन्धं व्यवस्थाप्यते । तदनु, तत्त्वज्ञानान्निर्वेदः सोदाहरणं निरूप्यते । वत्सलस्य रसान्तरत्वमाशङ्क्य, स्वमतेन भक्तिरसस्येव शृङ्गार एव अन्तर्भावः प्रतिपाद्यते । मतान्तरेण भक्तेर्भावत्वमुपपाद्य, देव - द्विज - मुनि - नृप - पुत्रविषयायाः तस्या निरूपणं क्रियते । किं च, स्थायिभावस्यैव रसत्वं, नान्यस्य भावस्येति सोदाहरणं व्यवस्थाप्यते ।

रसानां परस्परं विरोधः, तत्परिहारश्च सोदाहरणं निरूप्येते । ततश्च यथायथं शृङ्गारादयो रसाः, रसाभास–भावभास - भावशान्त्यादयश्च नाट्यशास्त्रसंवादीकरणेन नवीनया प्रक्रियया सम्यङ् निरूप्यन्ते सप्रपञ्चम् ॥

## अस्य ग्रन्थस्य वैशिष्टयम्

नाट्यशास्त्र - काव्यप्रकाश - दशरूपक - ध्वन्यालोकादीन् लक्षणग्रन्थान् सर्वानप्यालोड्य, नवनीतायमानान् सारतमान् विषयान् संगृह्य, सर्वेषामपि सुलभबोधसम्पादनाय परमेणौदार्येण आरचितोऽयं अमूल्यः रसशास्त्रविषयकः प्रकरणग्रन्थः । रचनाशैली तु सुभगसुकुमारसुन्दरा समावर्जयति सहृदयानां सर्वेषामपि निर्मत्सराणि मनांसि । विषयानुवादादिष्विव, उदाहरणप्रदर्शनादिष्वपि समस्त्येव किञ्चिद्वैशिष्टयम् । अतिविशिष्टान्येव च उदाहरणानि उदाहृतानि । अन्यत्र लक्षणग्रन्थेषु यत्रकुत्रापि अनुदाहृता अपि केचन परमरमणीयाः श्लोका उदाहृताः । परमसुकुमारसुन्दरकरुणरसस्यन्दिमृदुमधुरसन्दर्भात् स्वविरचितप्रशान्तकलिकाग्रन्थादपि रमणीयतमाः त्रयः श्लोकाः समुदाहृताः ।

रसभावसद्भावसाधनप्रघट्टः, सामाजिकानामेव रसाश्रयत्वव्यवस्थापनप्रघट्टः; शान्तरसस्य अतिरिक्तत्वस्थापनप्रघट्टश्च अतीव पौढगम्भीरमञ्जुला विराजन्ते ।

अतोऽयं रसविवेकः, रसनिरूपणनिबन्धेषु सर्वेष्वपि विशिष्टं स्थानमलङ्करोतीत्यत्र नास्ति कियानपि सन्देहः ।

## ग्रन्थस्यास्य लाभप्रकारः, तत्प्रकाशने समुत्साहहेतुश्च

चतुर्दशवत्सरेभ्यः पूर्वं, सुगृहीतनामधेयानां विमर्शकसार्वभौमाणां सर्वशास्त्रपारदृश्वनां आन्ध्रभाषापितामहानां नैकविध प्रावल्भानां नाट्यशास्त्रादिविशिष्टप्रमुखग्रन्थसम्पादकानां अपूर्वश्रीकोशनिचयसम्पादनैकव्यसनिनां तत्सम्पादन एव व्यायीकृत स्वकीयसर्वस्वानां श्रीमतां मानवल्लि - रामकृष्णकवीनां परिचयः, सेवाभाग्यं च मम समभवताम् । तदा च, परमया कृपया तैश्च महोदयैर्महोदारैरनेकेऽपूर्वाः शास्त्रग्रन्था, स्वपुत्रसन्ततिमभ्यपेक्ष्य अत्यन्तमादराभिमानाभ्यां परिपाल्यमानाः प्रदर्शिता मह्यं, तत्तद्विशेषप्रकर्षादिसमुपवर्णनपुरस्सरम् । तेष्वन्यतमोऽयं रसविवेकनामा रसस्वरूपसर्वस्वसारसंग्रहरूपः सुरुचिरो निबन्धराजः ।

रसमधिकृत्य च ललितललिततया प्रमाणयुक्त्युदाहरणसमुपस्कृतया सरण्या, विना शाखाचङ्क्रमणं, क्रियमाणा सुगततमा च चर्चाविरचनापद्धतिरत्र विद्यमाना, मामेतद्ग्रन्थसम्पादनकर्मण्यचूचुदत् । विज्ञापिते चैतस्मिन् विषये तेषां सविधे, सहृदयतल्लजैस्तैः "तथैव क्रियता" मिति न केवलमनुमतिः, नैव सुमहान् समुत्साहसमारंहः, किं तु, सप्रेमानुबन्धं ससम्मोदं च, महताऽभिमानेन तैः संरक्ष्यमाणा लिखितश्रीकोशमातृकाऽपि काचन अनुगृहीता मह्यमनुलेखनाय ।

उपलभ्य तं श्रीकोशं, निधिमिव परमदरिद्रः, परमानन्दभरितोऽहं तत्पुस्तिकासम्पादने त्वराकुलः, सपद्येव विलिखितुमारब्धवान् । उद्दिश्य च शीघ्रतया विलेखनकार्यपूर्तिं, मम प्रियशिष्यसहचरं विनयविवेकादिसद्गुणशेवधिं चिरंजीविनं श्रीमन्तं ईयुणिगोपालकृष्णाचार्यं च न्ययूयुजं द्वितीय - तृतीययोरुल्लासयोर्विलेखने । मौक्तिकमालायमानया च अक्षरमालया, सोऽपि द्वित्रेभ्यो दिवसेभ्य एव लेखनपूर्तिमकरोल्लेखकानां शिखामणिः वैयाकरणशिरोमणिः ।

परंतु, कृते चामूलाग्रं परिशोधने, बिन्दुमात्रमपि नावशेषितो ग्रन्थस्यास्य प्रकाशनसमुत्साहसन्ततिधारापरिवाहः, यतस्तत्र, शान्तिकर्मणि भेतालोदय इव, प्रादुरभूवन् ग्रन्थपात अपपाठ - लेखकाव्युत्पत्तिकल्पित - ऐन्द्रजालिकपदविन्यास — अस्पष्टलेखनाद्यनुसन्धानसञ्जनिता अज्ञानान्यथाज्ञानसंशयादिपिशाचिका अनुन्नेयप्रभावा नैकविधाः।

परं तु, पञ्चषवत्सरानन्तरं, तैरेव पुनः समाश्वासितोऽहं कृपालुभिः, मद्रनगर - तञ्जापुर - तिरुवनन्तपुरतालपत्रग्रन्थनिलयस्थैः श्रीकोशैः संवादीकर्तुं महान्तं प्रयत्नमकरवम्। परं तु, मद्रनगरराजकीयग्रन्थालयस्थश्रीकोश एक एव सुलभोऽभूत्। स च श्रीकोशः, अस्या लिखितश्रीकोशपुत्रिकाया मातृकैव; अतः किञ्चदपि प्रयोजनं नासीत्तेन; यतो, यत्र अत्र ग्रन्थपातः, अशुद्धपाठो वा समस्ति, तत्तथैव विराजते तत्रापि। अतः, पुनरपि निरुत्साहसंपरिष्वक्तस्तूष्णीमभवम्।

तदनु, काले गते बहुतिथे अत्र परिशोधनालये संस्कृतपरिशोधनविभागाध्यक्षस्थानमलङ्कुर्वाणैस्तैरेव कविमहोदयैः अयमपि ग्रन्थः परिशोधनालयसम्पादितसंस्कृतग्रन्थपट्टिकायां संमिश्रतः, मुद्रणाय सज्जीकृततया प्रणालिकायां निर्दिष्टश्च।

तदा च, सरलहृदया प्राज्ञशिरोमणयः परिपूर्णविज्ञानसम्पत्तिहेवाकपरिपाकाः अस्मदध्यक्षपादाः श्रीमन्तः परवस्तु रामानुजस्वामिमहोदयाः परं, मुद्रणाय सज्जीकृतां तां प्रतिमवलोक्य, जाताशंकाः, मामाहूय पर्यपृच्छन् "अयं ग्रन्थो मुद्रणाय सज्जीभूतो वा, न वे" ति। तन्निशम्य, "अनेकास्त्रुटयः, ग्रन्थपाताः, दोषाश्च वर्तन्ते; अतोऽयं ग्रन्थ इत्थमेव मुद्रितुं नार्हः। तञ्जापुरतिरुवनन्तपुर - पुस्तकालयस्थप्रतिभिस्साकं तूलनीयोऽयम्। यदि लभ्यन्ते समीचीनाः पाठाः, तदनु मुद्रणविषयं नेतुमर्हति" इति मया सविनयं विज्ञापिते, एतन्मुद्रणकार्ये चात्यन्तं बद्धश्रद्धाः, सञ्जातसंमुत्साहास्ते चाध्यक्षमहोदयाः, तत्तद्ग्रन्थालयेभ्यः पुत्रिकाः समानयामासुः, तेषां सहायेन समीकृतेऽप्यस्मिन् ग्रन्थे, पञ्चषा ग्रन्थपाताः स्वबुद्ध्या पूरणीया एव विलसन्ति स्म। तेषु सर्वेष्वपि ग्रन्थपाताः समाना एव वर्तन्ते। परं तु, असम्पूर्णोऽपि तञ्जापुरस्थश्रीकोशः समीचीनो वर्तते; यत्र स्थिताः पाठभेदा अनुबन्धे प्रदर्श्यन्ते।

अपि च, अत्र उदाहृतेषु श्लोकेषु, वाक्येषु च मूलग्रन्थेभ्यः पाठभेदा वर्तन्ते। कुत्रचिदनन्वितानि, अशुद्धानि च वाक्यानि वर्तन्ते। मुद्रणालयकल्पितासौकर्यवशाच्च

अनेका अशुद्धयः, त्रुटितास्फुटाक्षराणि च निपतितानि । तदेतत्सर्वं द्वितीय-संस्करणे समीकरिष्यते ; एतन्मध्ये च समीचीनं मातृकान्तरं, ग्रन्थस्य व्याख्यानादिकं वा भगवतः श्रीनिकेतनस्य निरवग्रहेणानुग्रहेण लभ्येतेत्याशास्महे । अतः, मर्षणीया एता अशुद्धयः वत्सलैः सहृदयैः ।

## एतद्ग्रन्थस्य मातृकाणां परिचयः

GOVERNMENT MANUSCRIPT LAIBRARY MADRAS.

R. No. 589. Rasaviveka रसविवेकः

Palm · leaf 18⅜ × 1¼ Inches. Foll 40. Lines 7 in a Page. Telugu. Good. Foll 28 is lost.

Purchased in 19, 12-13 from Sambasiva Sastri of Tiruvancoil in the Tirunalvelly District.

This is a treatise of Rasa or artistic delectablences, Consisting of theree chapters dealing with रसस्वरूपनिर्णय (2) रसाधिकरणनिरूपण (3) रसभेदनिरूपण. The author's name is not Known, but he states that he is the brother of Saujanya bhuṣaṇa kavi and salutes sri Dakshinamurthi sūri as a Precepter. Complete.

Begining:

जयत्यप्राकृतं ज्योतिर्दूरं वाक्चेतसोरपि ।
विवृत्तिं यस्य मन्यन्ते बुधा शब्दार्थरूपिणीम् ॥

इदमस्तु नमस्तस्मै ........ जगदासीत्परोरजः ।
जयति रसाख्यं तत्त्वं........ब्रह्मास्वादस्य नेदिष्ठम् ॥

.... .... .... ....

नाहंकृतेरधिगमो.... .... ....
.... .... रसबोधनेऽस्मिन् ।
सौजन्यभूषणकवेरनुजत्वगर्वः ॥

End:

पश्येत्कश्चिच्चल .... त्याददानाऽभिधत्ते ॥

Colophon:

इति रसविवेकनाम्नि का यादर्शे रसभेदविचारो नाम तृतीय उल्लासः

The date of Transcription and the name of the Scribe are given thus

नले वर्षे सहे मासे पूर्णिमायां ज्ञवासरे ।
ग्रन्थो रसविवेकाख्यः कृष्णेन लिखितोऽभवत् ॥

---

MAHARAJA SERFOJIS SARASWATHI MAHAL
*Sanskrit M. S. S Library, Tanjore.*

---

5288 रसविवेकः
Burnell's Catalogue
No. 10665 c

Substance - palm leaf Size 18½ × 1½ inches, leaves 32 (56-87), lines 6 to a page, Script grantha. No of Granthas 759. Incomplete.

Bigining:

दलहरी परंपरा .... .... ....
प्रहारमूर्छनाप्रलयकातराभ्युत्थानानन्तरं

End

अत्र त्रासोदयो यथा —

असोढा तत्कालो .... .... युगपदभियुक्तः स्मरहरः ॥
पश्येत्कश्चित् .... .... न्याददानाऽभिधत्ते ॥

Colophon:

इति रसविवेकनाम्नि काव्यादर्शे तृतीयोल्लासः

---

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्मतमसः सा जयति सरस्वती देवी ॥

इत्थं लेखकः परशुरामजम्बुनाथ महाशर्म्भे ।

Leaf No. 68

इति रसविवेकनाम्नि काव्यादर्शे रसस्वरूपनिर्णयो नाम प्रथमोल्लास ।

Remark: The M. S. S. is a fairly Good Condition: This work has not been noted by Dr. Burnell. For other works Contained herein See No. 4264.

---

*Sri Venkateswara Oriantal M S. S. Library, Tirupati.*

7210 रसविवेकः This is a Copy to Tanjore M S. S., Transcribed by T. J. Ramarao.

7273/2 रसविवेकः This is a copy to Trivandram M. S. S. Transcribed by Parameswaran Pillai. And a Copy of M. R. Kavi garu.

---

*H. H The Maharaja's Palacc Library,*

Trivandram (तिरुवनन्तपुरम्)

1384 रसविवेकः (काव्यादर्शः)

Palm leaf sige. 16×"2" Leaves 25. 9 Lines per page and 80 letters per line. Script-Malayalam.

No. of Granthas 1125.

Description of Rasa (artistic delectablenes) and its essentials.

Begining:

जयत्यप्राकृतं .... .... शब्दार्थरूपिणीम् ।

End

अविरलकरवालकम्पनैः .... तवेक्षणे क्षणात् ।

.... .... .... ....

पश्येत्कश्चिच्चल .... .... ....

अत्र शंकासूयाधृतिस्मृतिश्रमदैन्यचिन्तौत्सुक्यानां शबलतेत्यस्य भावाङ्गत्वम् ।

इत्थं रसात्मा विविधैः प्रकारैः
निरूपितो .... .... पूर्व्या
ज्ञात्वा यदीयं रसिकः प्रयोगं
प्रमोदते शब्दमये विवेके ॥

---

Colophon:

इति रसविवेकनाम्नि काव्यादर्शे रससंभेदविचारो नाम तृतीय उल्लासः । पूर्णोऽयं रसविवेको नाम ग्रन्थः ।

---

This M. S. S. is very old and decayed; but, the Script is legible, it is identical with No 589 T. C. M. Vol. I Part. C.

The word Kavyadarsa in a Colophon refers only on the literary aspects and not to the title. The author was the brother of Soujanyabhuṣaṇa kavi and a desiple of Dakshiṇamurthi. Vide p 805 T. C. M. Vol I Part 1. C.

1385. Palmleaf. Sige 7 × 1½ leaves 87. 7–8 lines per page and 28–32 letters per line. Script Malayalam No. of Granthas 1125.

---

अमुं ग्रन्थमधिकृत्य अलङ्कारचरित्रलेखका न किञ्चदपि विलिलिखुः । साहित्यरत्नाकरेत्यादि – नैकविधबिरुदालङ्कृताः श्रीमन्त M. कृष्णमाचार्य (M. A. M.L. Ph.D.) महाशयास्तु स्वकीये संस्कृतसाहित्यचरित्रग्रन्थे ग्रन्थममुमधिकृत्य एवं विलिखन्ति —

Rasaviveka Called kavyadarsa, is an excelent treatise in three chapters on Rasa, probably of the 14th century A. D. The author's name is not Known, but he was the brother of Soujanyabhuṣaṇa kavi and pupil of Dakshinamurthisuri. The illustrations are from ancient works of which the latest are Kshemendra's Silasathaka (क्षेमेन्द्रस्य शिलाशतकम्) till now unknown and Filhaṇas Vikramaṇkadevacarita (1-14) — इति ।

परं तु, अघोगमनिकायां —

An author or Kasmiradhipathi is qutoted can he be Harṣa mentioned as dramatic writer by Abhinava guptha.

इति विलिखन्ति ; तदनालोचननिबन्धनम्, यतोऽयं काश्मीराधिपतिः कीर्तितोऽत्र, मम्मट एव, नान्यः । तस्य नाम्ना काव्यप्रकाशगतश्लोका एव उदाह्रियन्त इति, अलङ्कारशास्त्रपरिचयवन्तस्सर्वेऽपि जानन्त्येव ।

## ग्रन्थकर्तुर्देशकालपात्रादिविचारः

सुललितस्य ग्रन्थस्यास्य निर्मातुर्नामैव न ज्ञायत इति स्थिते, तस्य देशकालपात्रादीनां परिज्ञानं दूरे स्थितमेव । अतिविलक्षणगद्यपद्यरचनाधुरीणः सर्वशास्त्रपारङ्गतो विचक्षणशिरोमणिरपि, यतश्शान्तशमदमाद्यनन्तकल्याणगुणनिधिरयं, तत एव स्वाहङ्कारनिरसनैकप्रवणः—

" नालङ्कृतेरधिगमो न च शब्दशास्त्र-
विज्ञानसम्पदथवा न विवेकपाकः ।
वाचालयत्यपितु मां रसबोधनेऽस्मिन्
सौजन्यभूषणकवेरनुजत्वगर्वः ॥ "

इति, स्वीयस्याग्रजस्य ख्यातिं ख्यापयन्, स्वस्य स्वसौजन्यातिशयं, सौजन्यभूषणकवेरनुजत्वभवनयोग्यतां च अभिव्यञ्जयतीति सुमहान् प्रमोदः । परं तु, अयं सौजन्यभूषण-

कविः कः ? कदा कुत्र आसीत् ? कं वा ग्रन्थमकरोत्, कीदृशी तस्य प्रसिद्धिः — इत्यमी ये केऽप्यंशा न ज्ञायन्ते । तमधिकृत्यापि एतदपेक्षया अयमपि ग्रन्थकर्ता न किञ्चिदभिधत्ते । अतः, तस्य विशेषाः कथंचिदपि ज्ञातुं नैव शक्यन्ते । अतः, अग्रजविषयं पुरस्कृत्य, अस्य चरित्रांशानां निर्णयः कथंतरां सम्भवेदपि ?

श्रीमन्तः सुप्रसिद्धपरिशोधकाः Dr S. k. De, Dr. V. Raghavan प्रभृतयोऽपि महाशया मया दृष्टाः, पृष्टाश्च एनं ग्रन्थं, ग्रन्थकारं चाधिकृत्य । परं तु, यः कोऽपि विशेषो न परिज्ञातस्तेषां सकाशात् । अपि च, अत्र असत्कलाशालायां वाङ्मय-चरित्रोपन्यासकोऽस्मत्सखः श्री राममूर्ती (M.A) अपि प्रायतत बहुभिः प्रकारैः बहु परिश्रम्य ; परं तु, न विज्ञातो यः कोऽप्यंशः — इति विज्ञापनीयमेवासीत् ।

मद्रनगरतालपत्रग्रन्थे प्रथमपत्रस्य पश्चाद्भागे विलिखिताभ्यां "प्रह्लादो विजयी", "नित्यं पुण्यजनार्दनाय" इति श्लोकाभ्यां, अयं तिरुवनन्तपुरवासी भवेदिति निर्णीयत इति चेत् ; तदिदं, अन्धस्य जात्यन्धेन यष्टिप्रदानमेव स्यात् ; तौ च श्लोकौ ग्रन्थ-गतावेवेत्यत्र न किञ्चिदपि प्रमाणमुपलभ्यते ; येन तत्प्रतिपादितविषयसञ्चारेण तिरु-वनन्तपुरनिवासित्वमस्य ग्रन्थकर्तुस्सम्भाव्येतापि । तौ च श्लोकौ लेखकेन, अन्येन वा प्रासङ्गिकतया विलिखिताविति विभाव्यते । मङ्गलावतरणरचनापद्धतिरपि, अनयोः श्लोकयोस्तत्र कथंचिदपि अवकाशं न प्रदास्यति ।

इदं परं वक्तुं शक्यते सबाहूक्षेपं — यदयं दाक्षिणात्य एव भवेत्, वैदर्भी-रीतिप्रियः, करुणरस - भक्तिरसयोरत्यन्तप्रवणः, दक्षिणामूर्तिशिष्यः, अद्वैतसम्प्रदायाभि-मानी, वेदान्त्यालङ्कारिकः, विज्ञानैकपक्षपाती, सुकविसहृदयतल्लजः, श्रीमतः सौजन्य-भूषणकवेरनुजवरः—इति ; हूणशकद्वादशशताब्दान्तरालकालिकानामेव कवीनां, लक्षण-काराणां च बिल्हणक्षेमेन्द्रपर्यन्तानामुत्कीर्तनात्, तदनन्तरकालिकानां कविलक्षण-काराणामनुत्कीर्तनाच्च प्रायशः त्रयोदशशताब्दकालिको भवेदयम् - इति च । सर्वथा चतुर्दशशताब्दानन्तरकालिको न भवेदयं कथञ्चिदपीति निश्चप्रचोऽयं विषयः ।

ननु मम्मटभट्टस्य काश्मीराधिपतित्वेनाभिवर्णनात्, "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी", "सर्वः कान्तमात्मीयं पश्यति" इति न्यायानुरोधेनायं काश्मी-

रीय एव कुतो न भवेत् - इति चेत्, न; आन्ध्रस्य भवभूतेः करुणप्रभुत्वेनाभि-वर्णनात्, तेन न्यायेन आन्ध्रोऽप्ययं भवेदिति प्रयनुयोगस्य तुल्यत्वात् - इत्यलं निराधारैः शुष्कैश्च विचारैः।

प्रत्युल्लासं आदावन्ते च संग्रहश्लोका विलिख्यन्ते । प्रथमोल्लासारम्भे च, विंशतिः श्लोकानां विराजते; अन्ते च —

" चिदानन्दमयो व्यङ्ग्यो लक्ष्यक्रमविनाकृतः ।
अलङ्कार्योऽप्यलङ्काररूपो रस इहोदितः ॥ " इति श्लोकः;

द्वितीयोल्लासारम्भे —

रसस्य विदिते तत्त्वेऽप्याधारो ज्ञायते न चेत् ।
दूरे तन्निश्चयो यस्मादतस्स प्रतिपाद्यते ॥ इति ;

अन्ते च —

आशिवादधि (पि) पिपीलिकावधि व्याप्य विश्वमिदमास्थितस्य यत् ।
आधृ (वृ) तेरिह रसस्य चिन्तनं तत्पुनस्तदतिलोकगं परम् ॥ इति च,

तृतीयोल्लासारम्भे —

केचिदष्टौ रसानाहुरन्ये नव दशापरे ।
तेन संशयलोलानां प्रीतये किञ्चिदुच्यते ॥ इति च

विद्योतन्ते ।

अनेन क्रमेण, तृतीयोल्लासपरिसमाप्तावपि ग्रन्थकर्त्रा उपसंहाररूपतया अवश्यं केचन श्लोका विलिखिता भवेयुरिति, अभ्यूहितुं शक्यते; यैश्च केचन विशेषा नियमेन ज्ञाता भवेयुः । परंतु, मद्रनगरपुस्तकालयस्थादिश्रीकोशेषु, यः कोऽपि श्लोको नैव दृश्यते । तञ्जापुरस्थमहाराजपुस्तकालयगतश्रीकोशे (५२८८ संख्याके) तु —

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्मतमसः सा जयति सरस्वती देवी ॥

इति कश्चन श्लोकः; तिरुवनन्तपुरमहाराजप्रासादस्थपुस्तकालयगतश्रीकोशे च (१३८४ संख्याके) —

इत्थं रसात्मा त्रिविधैः प्रकारैः
निरूपितो (ऽस्माभिरिहानु ?) पूर्व्या ।
ज्ञात्वा यदीयं रसिकः प्रयोगं
प्रमोदते शब्दमये विवर्ते ॥

इति श्लोकान्तरं च समुपलभ्येते । तावपि श्लोकौ ग्रन्थगतावेवेति रुचिरा सा शैली ज्ञापयत्येव । तथापि, कविवंशचरितादिकमधिकृत्य, तदग्रजस्य सौजन्यभूषण-कवेर्विशेषानधिकृत्य वा ये केऽपि विषया नैव ज्ञायन्ते । किं च, सुसूक्ष्मेक्षिकया चारित्रकांशपरिशोधनेनापि सौजन्यभूषणकविं, तदनुजं च अधिकृत्य किमपि न ज्ञायते ।

अपि च, अनेन ग्रन्थकर्त्रा, "प्रशान्तकलिका" नाम शान्तरसनिष्यन्दायमाना स्वविरचिता काचन कृतिः अस्मिन् ग्रन्थे प्रस्तूयते । तामधिकृत्यापि एतदपेक्षया किञ्चिदपि न ज्ञायते ।

एतादृशसुभगसुकुमारसुन्दरविलक्षणग्रन्थरचनापरिपाकपरिकर्मितस्य सरसवचन-रचनाविभूषणस्य सौजन्यभूषणकवेः प्रियानुजस्यास्य विद्वत्कवेः, अन्येऽपि केचन काव्यग्रन्थाः, लक्षणग्रन्थाः, वेदान्तादिशास्त्रग्रन्था अपि भवेयुरिति परिस्फुरति । भगवतः कल्याणकल्पतरोः श्रीनिवासस्य निस्तुलप्रसादप्रभावतश्च, अचिरेणैव कालेन, अनभिज्ञगृहादिगतमञ्च - पेटिका - वंशसम्पुटादिगहनारण्यप्रदेशतो वा, "असूर्यंपश्या अपूर्वाश्च इमाः सुकृतिसुन्दराङ्ग्यः" इति सपरिकरबन्धं सर्वतोभद्रं सर्वैरपि प्रयत्नैर्विवे-किभिः संरक्ष्यमाणात् शुद्धान्तगहनसीम्नो वा, "अस्माभिरेव प्रकाशनीया नान्यैः" इति सबद्धश्रद्धं प्रयतमानानां विमर्शकधुरीणानां व्यूहमयपञ्जरबन्धतो वा "प्राचीनानां

ग्रन्थसञ्चया इमे भगवदवतारस्वरूपाः " अतस्तेषां सर्वविधमाराधनमेव कार्यं साञ्जलिबन्धैरस्माभिरिति निरवधिकभक्तिभाजां भक्ताग्रेसराणां आराधनमन्दिरेभ्यो वा बहिराविर्भूय, सर्वेषामपि नयनगोचरा भवेयुरिति अनिशं भृशमाशास्महे ।

## मुद्रणसमये सङ्घटिता अनुपपत्तयः

अस्य ग्रन्थस्य मुद्रणसमये सङ्घटिता अनुपपत्तयः सहृदयानां हृदयसंवादाय निवेदनीया भवन्ति ।

तञ्जापुरतालपत्रग्रन्थपाठसन्दर्शनात्पूर्वमेव मुद्रणार्थं सज्जीकृता मातृका मुद्रणालये प्रदत्ता, श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयप्रधानाध्यक्षपदवीतो विश्रान्तिं स्वीकुर्वद्भिः श्रीमद्भिः प. वें. रामानुजस्वामि (M. A) महोदयैरितरग्रन्थैस्साकमस्य ग्रन्थस्यापि ।

ज्ञात्वा च तमिमं वृत्तान्तं, स्वीकृत्य तां मातृकां, तमपि तालपत्रग्रन्थमवलोक्य आपादचूडं सरभसं केचन विषयाः समीकृताः; पाठान्तरादयो विशेषास्तु सर्वे, प्रत्येकशो निवेदयितुं शक्यन्ते, मास्त्विदानीं मुद्रणविलम्ब इति निश्चित्य, अचिरमेव च पुनःप्रदत्ता सा मातृका मुद्रणालये मयापि ।

परं तु, अनुपदमेव अस्माकं विरामः सम्प्राप्तः । विरामे च कार्यान्तरवशादितस्ततो भ्रमणपरवशेन मया नाशकि सुतरामत्र दृष्टिं प्रसारयितुम् । तस्मिन्नेव समये मुद्रणालयाधिकारिभिः ग्रन्थस्यास्य मुद्रणमारब्धम् । तदा संवादिग्रन्थदर्शनादिसौकर्याद्यभावाच्च मया किञ्चदपि कर्तुं न पारितम् ।

अपि च स्वतन्त्रेण मुद्रणालयाधिकारिणा विलम्बमसहमानेन मुद्रणाय सज्जीकृतसमीचीनपत्रसञ्चयाद्यप्रदर्शनेनैव मूलग्रन्थमुद्रणकार्यं सरभसं निर्वर्त्यते स्म । संवादाय आवश्यकानि पुस्तकान्यपि तदा न प्रदत्तानि, तत्रत्यपुस्तकजातन्यूनाधिकभावपर्यवेक्षणकार्यव्यावृत्तिनिमग्नेन अस्माकं पुस्तकालयाध्यक्षेण च । अतः, कारणैरेतैः प्राकृतगाथादीनां समीचीनाः पाठाः प्रथमत एव मुद्रितुं नैव शक्ता इत्येव तु न, किंतु, अनेका अशुद्धयोऽपि निपतिताः ।

यावता मूलग्रन्थमुद्रणं समाप्तिमागात्, तावता अस्माकं कलाशाला, परिशोधन-शालापि समुद्घाटिते। तदनु, अचिरेणैव अत्रोदाहृतश्लोकवाक्यादीनामादर्शग्रन्थान् सर्वानपि संकलय्य. विनयविवेकादिकल्याणगुणसम्पन्नस्य, अमरकोशकाव्यनाटकादिबहुविधव्युत्पादकग्रन्थसततपरिशीलनपरिनिष्पन्नसुदृढव्युत्पत्तिकस्य साहित्यशिरोमणेः आंग्लान्ध्रहिंदी-साहित्यवाङ्मयादिषु परिनिष्ठितस्य अस्मत्प्रियभागिनेयस्य प्रियशिष्यावतंसस्य श्रीवेङ्कटेश्वर-संस्कृतमहाविद्याशालायां साहित्योपन्यासकपदवीमधिरूढस्य चिरायुषः श्री ति. न. च. वेङ्कटनरसिंहाचार्यस्य च साहाय्येन, परिशील्य तमिमं ग्रन्थमामूलाग्रं, अनुबन्धतया, आकरग्रन्थानां विन्यासः, आकरपाठ - पाठान्तर - शुद्धाशुद्धपाठादिपरिमिलिता शोधनिका च—इत्येवमादयः संस्काराः, यावच्छक्ति निर्मत्सरसहृदयमनःप्रसादाय कृताः, निबद्धाश्च। तदुपरि सहृदयानां हृदयपुण्डरीकमेव प्रमाणम् ।

## कृतज्ञताया आविष्करणम्

एवं, सर्वाङ्गसम्पूर्णतया अस्य ग्रन्थस्य सम्पादने बहुविधैः प्रकारैः साहाय्य-माचरितवतामाप्तानां महाशानां, मित्राणां च समुचिता कृतज्ञता निवेदनीयेति मदीयोऽयं विधिः, अत्र किञ्चिन्निर्वर्त्यते :—

प्रथमतः, सकलजगदुदयविभवलयलीलस्य सर्वचेतनाचेतनान्तर्यामिणः कल्याणाद्भुतगात्रस्य दिव्यकल्याणगुणगणमहार्णवस्य निखिललोककल्याणकल्पकस्य कलियुग-प्रत्यक्षदैवतस्य अस्मत्कुलधनस्य श्रियःपत्युः श्रीनिवासस्य साञ्जलिबन्धा सप्रणतितितिः कृतज्ञता निवेदनीया भवति ।

ततः, तदभङ्गुरदिव्यविभूतिपरिपालनव्यग्राणां एतद्ग्रन्थमुद्रणे स्वानुमतिमनुगृहीतवतां श्रीमतां तिरुमलतिरुपतिदेवस्थानधर्मकर्तृसंघसभ्यानां, तथा, तत्कार्य-निर्वाहकप्रमुखस्य श्रीमतः चे० अन्नाराव् महाशयस्य च कृते, परश्शता धन्यवादाः समर्पणीया भवन्ति ।

ग्रन्थस्यास्य सम्पादनाय, सम्मुद्रणाय च सकलविधसौकर्यमनुगृहीतवतां प्राज्ञ-शिखामणीनां प्रशान्तस्वान्तानां सहृदयतल्लजानां आदर्शजीवितानां नैकविधकल्याणगुण-गणमणीनां-भूतपूर्वासदध्यक्षचरणानां श्रीमतां परवस्तु - वेङ्कटरामानुजस्वामि (M. A.) महोदयानां, तथा, सुललितानां सहृदयानां सर्वविधसमुत्साहसम्पद्भिराजितानां संस्कृतांध्र-भाषयोरुभयोरपि M. A. पट्टविभूषितानां हिंद्याङ्ग्लप्रमुखनैकविधभाषाप्रवीणानां श्रीमतामद्यतनाध्यक्षाणां श्री जी. चेन्नारेड्डि महाशायानां च सर्वदाऽहमधमर्णः।

प्रप्रथमतः अस्य ग्रन्थस्य लिखितमातृकां वितीर्य, सर्वविधसमुत्साहमनुगृहीत-वतां विमर्शकपण्डितमण्डलीजेगीयमानसर्वतोमुखलोकातिशायिप्रतिभापरिश्रमादिविशिष्ट-विभवानां निर्मत्सरसहृदयधुरीणानां आन्ध्रांग्लगीर्वाणद्राविडादिनिखिलभाषालिपि-सञ्चयपरिज्ञानप्रथितप्रभावाणां निखिलशास्त्रनिशितपरिश्रमाणां आन्ध्रकुमारसम्भव-नाट्य-शास्त्रव्याख्यानादि-नैकविधप्रशस्तापूर्वग्रन्थप्रकाशनविसृत्वरविमलयशोविलासानां सर्वसुल-भानां सुभगसुकुमारहृदयानां ब्रह्मश्रीमतां श्रीमन्मानवल्लि रामकृष्णकविमहोदयानां उल्लोकप्रतिभादिसम्पत्त्यै, मयि सन्ततसन्दर्शितवात्सल्यप्रेमानुबन्धाय च साञ्जलिबन्धा इमे धन्यवादा निवेद्यन्ते।

ग्रन्थस्यास्य अनुविलेखनादिकर्मणि सम्यगुपकृतवतोः विद्वच्छिरोमण्योः अस्म-त्प्रियशिष्यमित्त्रत्नयोः श्रीमच्चिरंजीवि - ई्युण्णि गोपालकृष्णमाचार्य — तिरुमलैनल्लान् - चक्रवर्ति - वेङ्कटनरसिंहाचार्ययोः, अन्येषां चास्मिन् कर्मणि समुपकृतवतां प्रियमित्त्र-मणीनां च कृते मङ्गलाशासनपुरस्सरी कृतज्ञता समाविष्क्रियते।

सभूमिकस्य सानुबन्धादेश्च अस्य ग्रन्थस्य सर्वाङ्गीणरमणीयतया सम्मुद्रणे नितान्तं समुपकृतवद्भ्यः, सौम्येभ्यः श्री तिरुमलतिरुपतिदेवस्थानमुद्रणालयकार्यकरेभ्यः, विज्ञचूडामणये च तदधिपतये, कृतज्ञता अवश्यं प्रदर्शनीया भवति।

अपि च प्रच्युतो भवेयं मदीयाद्धर्मात्, यदि विस्मरामि धन्यवादानर्पयितुं निसर्गवत्सलेभ्यः, निरवधिककृपालुभ्यः, दोषज्ञशिखामणिभ्योऽपि दोषदूरीकरणचणेभ्यः, गुणमात्रग्रहणप्रकटनकलापारीणेभ्यः विद्वत्तल्लजेभ्यो विमर्शकमहाभागेभ्यः। ततस्तेभ्यो

निवेदयामि कृतज्ञतां, क्रियमाणज्ञतां, करिष्यमाणज्ञतां च मुहुर्मुहुः । विज्ञापयामि च सविनयं तेषां सविधे, " संस्करणीया विशेषा यदि आवेद्यन्ते परमया कृपया, तर्ह्यवश्यं सधन्यवादं स्वीकृत्य द्वितीयसंस्करणे ते सर्वे निवेशयिष्यन्ते " – इति ॥

## मङ्गलाशासनम्

विजयतां विजयतां, रसात्माऽयं परमानन्दसन्धायकः कल्याणकल्पकोऽसौ परमपुरुषः । जेजीयतां च तद्भक्तजनः सुकवि - सहृदय - परिशोधक - रसिकलोकः ॥

किञ्च

जयतु जगदशेषं रञ्जयन्नञ्जनाद्रौ
शुभगुणविभवेन श्रीमता विग्रहेण ।
अनुकलमनुकम्पोद्वेलया लीलया च
श्रुतिपरिषदि पुंसामुत्तमः श्रूयमाणः ॥

श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ।
अभङ्गुरविभूतिर्नस्तरङ्गयतु मङ्गलम् ॥

अपि च

जयतु जयतु नित्यं वेदमन्दारवृक्षः
जयतु मधुररम्यं तत्फलं संस्कृतं च ॥
जयतु रुचिरधर्मस्तद्रसः प्राज्ञसेव्यः
जयतु रसनिबन्धैर्विज्ञलोकः कवीशैः ॥

इति

यतिवर - वरवरमुनिवरकरुणासरिदष्टगोत्रकुलज इदम् ।
तिरुमलकुमारवेङ्कटनरसिंहसुदर्शनस्समर्पयति ॥

"सरस्वती श्रुतिमहतां महीयताम्"

[ महाकवेः - कालिदासस्य ]

सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥

[ महात्मनः — आनन्दवर्धनस्य ]

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्मतमसः सा जयति सरस्वती देवी ॥

[ रसविवेकः ]

प्रसीदतु भगवान् पद्मासहायः परमरसस्वरूपः परमपुरुषः; प्रसीदन्तु रसास्वादनैकप्रवणाः सहृदयतल्लजाश्च महात्मानः ॥



श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयः
श्रीसिंह (दुर्मुख) सिंहशुक्लपञ्चमी
भानुवासरः
९-९-१९५६

इति,
निवेदयिता
श्रीमदष्टगोत्रनैध्रवकाश्यपः
ति. कु. वें. न. सुदर्शनाचार्यः

श्रीरस्तु

श्रीमते वेङ्कटेशाय नमः

## तञ्जापुर महाराज शरफोजि सरस्वतीमहल् तालपत्रभाण्डागारस्थिते

## ५२८८ संख्याकग्रन्थे स्थिताः पाठभेदाः

अस्मिन् श्रीकोशे आदित आरभ्य ८ तमपुट प्रथमपंक्तौ "प्रकटमो" इति पर्यन्तो भागो नास्ति "द लहरी" इत्यारभ्यैव वर्तते ।

---

| पृष्ठं | पंक्तिः | मुद्रितपाठः | एतत्कोशस्थितपाठः | पृष्ठं | पंक्तिः | मुद्रितपाठः | एतत्कोशस्थितपाठः |
|---|---|---|---|---|---|---|---|
| ८ | २ | मूर्धानःप्रवयः | मूर्छनाप्रलय | १५ | ११ | न जानीमः....विकार - | |
| ,, | ,, | अपि अर्थानां | | | | | इति नास्ति (ग्रन्थपातः) |
| | | अनन्त | व्यूढानन्तरं | ,, | १४ | तात्म संस्कारः - | |
| ,, | ५ | द्रुलयेषु तत्व | द्रुलये व्यतत्व | | | | इति नास्ति (ग्रन्थपातः) |
| ,, | १६ | शून्यस्य निर्वृति | शून्यनिर्वृति | ,, | १८ | व्यभिचारिणाम् - | इति नास्ति |
| ९ | ४ | तत्र रसो | तत्र तत्र | ,, | १९ | अभिज्ञैः परिकीर्त्यते - | ,, |
| ,, | ६ | आनन्दो | तच्च आनन्दो | ,, | २२ | कातरा | कान्तया |
| ,, | १३ | रिच्यत इति | रिच्यत एवेति | ,, | ,, | जहौ — | इति नास्ति । |
| ,, | १८ | सुखस्य वृत्ती | सुखवृत्ती | १६ | २ | न स्थेमनी - | ,, |
| ,, | २० | विषये....जायन्ते- | यो धार्यते | ,, | ५ | यौवानसु - | ,, |
| ,, | २१ | स्वर्गसुखतया- | स्वप्रतिबिम्बतया | ,, | ५ | अनुभावा विभा- | ,, |
| १० | ५ | ये चात्यन्त | ते चात्यन्त | १७ | ५ | मम जीवित- | ,, |
| ,, | ८ | स्वयं प्रथते | स्वयं प्रथते | ,, | १० | तदुक्तम् - | ,, |
| ,, | १८ | स्वयं वेद्यमानत्वं | स्वयं वेदनत्वं | ,, | १३ | स्वाद्य - | ,, |
| ,, | २१ | ब्रह्मसुखेन | ब्रह्मसुखेनैव | ,, | १६ | नानार्थान् | नानार्थविनिष्पन्नान् |
| ११ | ६ | श्राव्यं | काव्यं | | | | विभावनिष्पन्नात् |
| ,, | ८ | सन्निधानहेतु | सत्तया हेतु | ,, | १८ | येनैव — | नास्ति । |
| ,, | १४ | कार्यकारण | कारणकार्य | १८ | ३ | कार्यत्वेनापि | कार्यत्वेनावधृतः |
| ,, | २१ | विद्याश्रम | विद्याक्रम | ,, | ४ | आत्मनीनकार्ये- | |
| १३ | १८ | द्वयस्यावह | द्वयस्याहरण | | | | आत्मनीनकार्यज्ञवर्य |
| १४ | ८ | निरुपपादः | दुरुपपादः | ,, | ५ | विकार — | इति नास्ति । |
| | | | (७२७३ कोशे) | ,, | ५ | रूपोऽपि सद्भावं | |
| ,, | १७ | तेन न ज्ञायये - | तेन तु ज्ञायते | | | | रूपविकारसंसद्भावं |

(V - B.)

| पृष्ठं | पंक्तिः | मुद्रितपाठः | एतत्कोशस्थितपाठः |
|---|---|---|---|
| १८ | ८ | विकारः — | इति नास्ति । |
| १९ | ४ | यथास्वमनु | यथा स्वयमनु |
| ,, | ५ | आत्मनैवोन्नीयन्तः | नानैवोत्मी- |
| ,, | ६ | स्थायिभावतामेव ते [लयन्तः | स्थायिस्वभावतामेवानुभवन्तः |
| ,, | ७ | मुपचिन्वाना | मुपचिन्वता |
| ,, | १९ | सुखादिलक्षणैः | दुःखादिलक्षणैः |
| ,, | २२ | स्वविभावबलात् | स्वविभाववैभवबलात् |
| २० | २ | सत्त्वोपेतानां | सत्त्वोपेताः |
| ,, | १३ | करुणभयानकयोरिति | करुणरौद्रभयानकानामिति |
| ,, | १५ | व्वञ्जितत्वमिति- | व्यञ्जकत्वमिति |
| २१ | ४ | भावव्यक्त्यैव- | भावाभिव्यक्तेः |
| ,, | २३ | विश्लिष्यत्कुसु - | विश्लिष्यन् कुसु |
| २२ | ४ | तस्यासंविदि | तस्याविदि |
| ,, | ४ | तदप्रयोगेऽपि- | ततःप्रयोगेऽपि |
| ,, | ४ | ब्रूयात् | प्रति ब्रूयात् |
| ,, | १३ | तेनाभिधेयो- | तेन समभिधेयो |
| ,, | २२ | लाक्षणिकत्वं | लाक्षणिकम् |
| २३ | ७ | माघातु | मायातु |
| ,, | १२ | व्यज्यते | व्यञ्जय |
| ,, | २१ | निबन्धने | निबन्धेन |
| ,, | ,, | प्रतिपादके | प्रतिपादको |
| २४ | १० | प्रतिपात्तेभावाद्यङ्गत्वं - | प्रतिपत्तेर्विभावाद्यङ्गत्वम् |
| २५ | १० | रादिशब्दः स्वार्थे | रादिशब्दार्थे |
| २७ | ६ | यत्रापदार्थों | यत्र पदार्थों |
| २८ | ९ | काव्येषु | काव्येन |
| २९ | ४ | रनुभूयमानो - | रनुमीयमानो |
| ,, | १० | भाव उच्यते - | भावना यथा |
| ,, | १२ | भवितं | भावितं |
| ,, | १३ | व्याप्त्यर्थे - | व्याप्त्यर्थे भवतीति |
| ३० | ४ | भवति | भावयति |
| ३१ | २० | मतिमास्थाय | मतिमादाय |
| ,, | २३ | व्यङ्ग्यत्वं | व्यङ्ग्यत्वं ध्वनेः |
| ३२ | १३ | व्यङ्ग्यः अल — | व्यङ्ग्यो यथ । — लावण्येति श्लोकः । अत्र वक्त्रचन्द्रयोरुपमालङ्कारो व्यङ्ग्यः । |
| ३३ | ७ | रलङ्काराः - | रलङ्कारा उक्त हि— |
| ,, | १४ | मनोरोग | मनोराग |
| ,, | १५ | विघृतः | विवृतः |
| ३४ | ८ | सुसंवेदन | स्वसंवेदन |
| ,, | १२ | भाववासनाप्राप्तिः | भावनाऽप्यस्ति |
| ,, | १३ | यन्मतम् | स्यान्मतम् |
| ,, | १९ | सम्बन्धाग्रहे - | असम्बन्धग्रहे |
| ,, | २२ | भावमनुकार - | भावानुकार |
| ३५ | ४ | प्राणो हि रसः। रसिकानां - | प्राणो हि रसो रसिकानाम् । |
| ,, | ५ | रसानुभवः - | रसानुभव एव |
| ,, | ६ | ताद्रूप्यानुसन्धा - | ताद्रूप्यातिसन्धा |
| ,, | १९ | द(ध)त्ते । अयमेव - | दधन्नय |
| ३७ | २ | यत्रात्म | सत्यात्म |

| पृष्ठं | पंक्तिः | मुद्रितपाठः | एतत्कोशस्थितपाठः |
|---|---|---|---|
| ३७ | २३ | रामानुकृति - | रामाद्यवस्थानु |
| ,, | २४ | रसः। तेनान्यस्य | रसो नान्य |
| ,, | २५ | भावसम्भवो | भावसद्भावो |
| ,, | २६ | भावस्तेष्वपी | रसस्तेष्वपी |
| ३८ | ७ | नेतुमनिगदतो - | नेतुकामस्य |
| ,, | १२ | सत्यङ्गीक्रियमाणे | सत्येव |
| ,, | २२ | एव नटाहित- | एवानन्दाहित |
| ३९ | ३ | निष्प्रतीयेरन् ज्ञानचक्षुषा - | निष्प्रतिघेन चक्षुषा |
| ३९ | ४ | स्ववाङ्मयादि प्रतीतिषु - प्रतिच्छन्दयन्ति— | स्वमानन्दमयादिति - प्रतिबिम्बं दधति |
| ३९ | ५ | समर्पितां | समतां |
| ,, | ६ | निराश्रयमेवोपनिषद्धा .... नटेषु उपस्थापयन्ति — | निराश्रयमेवो स्थापयन्ति |
| ३९ | १७ | न्यायः सीताद्यु- | न्यायो, येन सीताद्यु |
| ,, | १७ | द्रष्टव्यः | द्रष्टव्यम् |
| ,, | १९ | योगाभावात् | योगाभावश्च |
| ,, | २२ | विवृद्धिर्बिम्ब | विवृद्धिं बिम्ब |
| ४० | ,, | रसाङ्गभूतस्यापि रसप्रवण — | रसाङ्गव्यापारप्रवण |
| ,, | १८ | भावकस्य | गायकस्य |
| ,, | २१ | आशिवादधि - | आशिवादपि |
| ,, | २२ | आधृते | आवृत्ते |
| ४१ | ६ | स्वादतां | स्वादगोचरतां |
| ४२ | १० | इव | च |

| पृष्ठं | पंक्तिः | मुद्रितपाठः | एतत्कोशस्थितपाठः |
|---|---|---|---|
| ४२ | १४ | समुद्भावन | सद्भावन |
| ,, | १६ | परस्परोपात्त - | परस्परोपकार |
| ,, | १७ | तुल्याधिकरयोः - | तुल्याधिकरणयोः |
| ,, | २० | एतच्च | एवं च |
| ४३ | ८ | प्रशमन | लय |
| ,, | २३ | प्रसिद्धिः | प्रसिद्धेः |
| ४४ | ५ | एकत्व | मैत्री |
| ,, | ६ | बन्धस्य आस्वादः — | शान्तस्य स्वादः |
| ,, | ० | रसत्वाभावापेक्षया - | रसापेक्षय |
| ४५ | ९ | वर्तते | दृश्यसे |
| ,, | १० | तापेनानु | तापादनु |
| ४६ | १९ | न्येऽप्युदाहार्याः - | न्येषूदाहार्यम् |
| ४७ | २० | प्येकावलम्बन - | प्येकस्वालम्बन |
| ४८ | २ | तथाहि | तथापि |
| ,, | २५ | भसाच्च | भासनाच्च |
| ४९ | ३ | पुष्ट्यै | पूर्वैः |
| ,, | ३ | महिमळि अ | महीळि अ |
| ,, | ३ | अय | अध |
| ,, | ४ | मुहरित | महरत |
| ,, | ५ | अगणहद उंगसु - | अगणपि रुइंगसु |
| ,, | १४ | अङ्गत्वाङ्गित्वमा - | अङ्गिन्यङ्गत्वमा |
| ,, | ,, | न तौ | तौ न |
| ,, | २३ | मुनिजनस्य | जिनस्य |
| ५० | २ | परश्शृङ्गार | परः शृङ्गारी |
| ,, | २ | दर्शनोत्सुकः - | दर्शनस्योत्सुकः |

| पृष्ठं | पंक्तिः | मुद्रितपाठः | एतत्कोशस्थितपाठः | पृष्ठं | पंक्तिः | मुद्रितपाठः | एतत्कोशस्थितपाठः |
|---|---|---|---|---|---|---|---|
| ,, | २ | साम्यविवक्षया | — | ५१ | २३ | स्योपवनमधुना | स्योपनतमहो |
| | | | साम्यविवक्षायामतोऽन्यत एव | ५३ | २२ | चञ्चुः | चक्षुः |
| ५० | १९ | मन्मान | यन्मान | ५८ | ,, | प्रत्यभैत्सुखवदन्त्य- | प्रत्यमंत्सुखवंत्य |
| ,, | २४ | सुकृतिनः | कृतधियः | ६२ | ९ | वेश्याङ्गनाभि - | पण्याङ्गनाभि |
| ,, | २६ | पूर्वेभ्यो भावेभ्यः | — | ७१ | ६ | करुणप्रभो | रसिकप्रभो |
| | | | पूर्वस्य पूर्वस्य | ७७ | १२ | भालङ्कन | भूलङ्कन |

N. B:— अपि च तत्र तत्र अनेके ग्रन्थपाता वर्तन्ते। ते विस्तरभिया नोल्लिखिताः।

---

S. V. O. I. 7273/2 संख्याके विद्यमानाः पाठभेदाः

(अयं कोशः तिरुवनन्तपुरकोशस्य प्रतिकृतिः)

| | | | | |
|---|---|---|---|---|
| ४ | १९ | ग्रहीतृभावत् | — | ग्रहणाभावत् |
| ५ | ८ | (शब्दपरिहारेण अर्थव्यपदेश्यत्वमिव) | - | समयार्थशब्दाभिधेयत्ववत् |
| १४ | ८ | निरुपपादः | — | दुरुपपादः |

७७ ७ "स्मरसि स्मर....ताडननि च" इति श्लोकपर्यन्तमेव अस्मिम् कोशे ग्रन्थो वर्तते।

---

श्रीरस्तु

श्रीमते वेङ्कटेशाय नमः

## विषयसूचिका

—❀—

| विषयः | पृष्ठसंख्या |
|---|---|
| (प्रथमोल्लासः) | |
| ग्रन्थविभागः | ३ |
| रसस्य सद्भावसमर्थनम् | ,, |
| रसस्वरूपनिरूपणम् | ५ |
| भावस्य व्यवस्थापनम् | ,, |
| रसस्य अपुरुषार्थत्वाशङ्का | ६ |
| रसस्य पुरुषार्थत्वव्यवस्थापनम् | ७ |
| अन्तःकरणवृत्त्यपेक्षया सुखस्य व्यतिरिक्तत्वस्थापनम् | ९ |
| अलौकिकरसस्य सामग्री | ,, |
| रसस्य आनन्दसंविद्रूपत्वसमर्थनम् | १० |
| कार्य - कारण - सहकारिणां अनुभाव-विभावव्यभिचारिपदव्यपदेश्यत्वम् | १० |
| विभावादित्रिके एकैकस्यापि रसनिष्पत्तिहेतुत्वाशङ्का | ११ |
| समुदितानामेव विभावादीनां कारणत्व-समर्थनम् | १२ |
| विभावस्य निर्वचनम् | १६ |
| अनुभावस्य निर्वचनम् | ,, |
| व्यभिचारिभावानां स्थायिभावसह-कारित्वव्यवस्थापनम् | १९ |
| व्यभिचारिभावनिर्वचनम् | ,, |
| सात्त्विकभावानां वैशिष्ट्यम् | २१ |
| रसस्य व्यङ्ग्यत्वव्यवस्थापनम् | २२ |
| व्यञ्जनावृत्तेर्व्यवस्थापनम् | २३ |
| रसस्य दोषाणां निरूपणम् | ,, |
| सिद्धस्य रसस्य व्यङ्ग्यत्वे अनुपपत्तिशंका | २५ |
| दशरूपककर्तृमतनिराकरणम् | २६ |
| अन्विताभिधानवादिनिराकरणम् | २७ |
| रसादेर्भाव्यभावक एव, न व्यङ्ग्य-व्यञ्जकभाव इत्याशङ्का | २८ |
| रसकाव्ययोः सम्बन्धो व्यङ्ग्यव्यञ्जक-भाव एवेति सिद्धान्तः | २९ |
| व्यङ्ग्यार्थविभागः | ३० |
| उत्तम - मध्यम - अधमकाव्यनिरूपणम् | ,, |
| ध्वनिभेदनिरूपणम् | ३१ |
| अत्यन्ततिरस्कृतवाच्यध्वनिनिरूपणम् | ,, |
| अर्थान्तरसङ्क्रमितवाच्यध्वनिनिरूपणम् | ,, |
| असंलक्ष्यक्रम - संलक्ष्यक्रमविभागः | ,, |
| रसादेरसंलक्ष्यक्रमव्यङ्ग्यत्वम् | ३२ |
| वस्तुव्यङ्ग्यनिरूपणम् | ,, |
| अलङ्कारव्यङ्ग्यनिरूपणम् | ,, |
| गुणीभूतव्यङ्ग्यनिरूपणम् | ,, |
| अनुप्रासस्य रसोपकारकत्वम् | ३३ |
| उपमाया रसोपस्कारकत्वम् | ,, |
| प्रथमोल्लासस्य उपसंहारः | ,, |
| (द्वितीयोल्लासः) | ३४ |
| उल्लासार्थसंग्रहः | ,, |
| "अनुकार्य एव रस" इति पक्षनिरासः | ,, |
| नटस्याश्रयत्वपक्षनिरासः | ,, |
| समरसीभावपक्षनिरूपणम् | ३५ |
| उल्लङ्घनक्रमनिरूपणम् | ३६ |
| लयनिरूपणम् | ३६ |
| संप्रज्ञातसमाधिनिरूपणम् | ,, |
| असंप्रज्ञातसमाधिनिरूपणम् | ,, |
| नाटकस्य प्रयोजनकथनम् | ३७ |
| भावस्य रसभावनिरूपणम् | ,, |

श्रीरस्तु

श्रीमते वेङ्कटेशाय नमः

# ॥ रसविवेकः ॥

॥ ओं ॥

(अवतरणम्)

जयत्यप्राकृतं ज्योतिर्दूरं वाक्चेतसोरपि ।
विवृत्तिं यस्य मन्यन्ते बुधाः शब्दार्थरूपिणीम् ॥

इदमस्तु नमस्तस्मै दक्षिणामूर्तिसूरये ।
यत्पादपद्मरजसा जगदासीत् परारजः ॥

जयति रसाख्यं तत्त्वं सुहृदां स्वानन्दसंविदावेद्यम् ।
यदुदाहरन्ति कवयो ब्रह्मास्वादस्य नेदिष्ठम् ॥

जयति स भावो योऽसौ समस्तसन्धारणैरुपायैस्तैः ।
श्रोतृप्रेक्षकवर्गं नायकवद्रसनयं कुरुते ॥

*यो लौकिकेऽप्यतिजनः कारकसिद्धोऽप्यकार्यभूतश्च ।
सविकल्पोऽप्यविकल्पः स रसः केनोपमीयते कविना ॥

---

१. प्रह्लादो विजये रमापि नितरामभ्यासते यत्सदा
श्यानन्दूरपुरं सुरक्षितमद प्रह्लादनोऽयं स्वयम् ।
आगत्यात्र नृकेसरी यदुवरः श्रीपद्मनाभः स्थितः
दृष्ट्वा वञ्चिमहीपतेर्वितरणप्रौढिं प्रोल्लिस्मिताम् ॥

२. नित्यं पुण्यजनार्दनाय विबुधा निर्बन्धमातन्वते
वैकुण्ठे, कलशाम्बुधिर्न जडतामद्यापि मुञ्चत्यसौ ।
श्यानन्दूरपुरं तु पुण्यजनतोऽबाधं बुधैकाश्रयम्
तत् प्राज्ञाय ततस्सुखं फणिपतौ निद्राति भद्राकृतिः ॥

N. B. इमौ श्लोकौ (ख) पुस्तके दृश्येते अशुद्धिबहुलौ। मदरासराजकीयहस्तलिखितपुस्तकालयस्थिते तालपत्रग्रन्थे च प्रथमपत्रस्य (त्रुटितस्य) पश्चाद्भागे दृश्येते।

स्वानन्दसंविद्रूपस्य पुलकाङ्कुरसाक्षिणः ।
विरलाः खलु बोद्धारो रसस्य ब्रह्मणो यथा ॥

शब्दब्रह्मविवर्तेषु विद्यास्थानेषु विश्रमः ।
कस्यापि कृतपुण्यस्य संसाराध्वप्रधाविनः ॥

न तच्छास्त्रं न सा विद्या [1]न तत्त्वं न सा कला ।
यन्न काव्याङ्गतां यायात् काव्यं सर्वात्मकं यतः ॥

ज्ञानविज्ञानवैदग्धीमतुलां संप्रविप्सुभिः ।
ज्ञेयः काव्यस्य तत्त्वार्थो[2] विवेकः सद्र[3]साद्भवेत् ॥

श्रवणादिविधेरनन्तरं कृतपुण्यस्य समाधिसम्पदा ।
भविता परमार्थनिर्वृतिर्भवति ह्यत्र गृहीतमात्रतः ॥

परानन्दपदप्राप्तिं कीर्तिं लोकज्ञतां धनम् ।
स्त्रीसम्मितोपदेशं च प्राहुः काव्यप्रयोजनम् ॥

[4]ओजसोद्दीपितां कान्तां प्रसादललिताकृतिम् ।
माधुर्यधुर्यां सरसां कृतिं के नानुमन्वते[5] ॥

दाम्पत्यं प्रेमरहितं मैत्रं हेतुनभावितम् ।
काव्यं च नीरसमिति त्रितयं लोकगर्हितम् ॥

उत्तमो नायको वर्ण्यः श्रोता मात्सर्यवर्जितः ।
सरसाः सूक्तयश्चेति कवेः सुकृतसम्पदः ॥

रसेनानन्दनिष्यन्दं अञ्जसा न करोति यत् ।
श्रोतॄणां तर्हि तत्काव्यं स्वाध्यायः शास्त्रमेव वा ॥

1. न तत्त्वं तन्न सा कला (क)
2. तत्त्वार्थविवेकः (क)
3. सरसाद्भवेत (क)
4. ओजजोद्दीपिताम् (क)
5. को नानुमन्यते । (क, ख)

यद्भाव–यदभावाभ्यां काव्याकाव्यत्वयोः पदम् ।
शब्दार्थौ रसतत्त्वं तत स्वसंवेद्यं सतां मतम् ॥

[1]तस्यास्य रसतत्त्वस्य विचारे प्रयतामहे ।
मन्दधीप्रतिपत्त्यर्थं ज्ञात्वा तद्ग्रन्थविस्तरान् ॥

नालङ्कृतेरधिगमो न च शब्दविद्या-
विज्ञानसम्पदथवा न विवेकपाकः ।
वाचालयत्यपि तु मां रसबोधनेऽस्मिन्
सौजन्यभूषणकवेरनुजत्वगर्वः ॥

अस्मिन्निसर्गगहने रसिकप्रसिद्धे
मार्गे कुतर्कतिमिरोपहतप्रकाशे ।
अस्मद्विधस्य चरतः स्खलनं न दोषं
सम्पादयेदिति कृतो व्यवसाय एषः ॥

यत्पदस्य[2] किल दोषसञ्चयं सन्निगृह्य गुणवर्गमादधत् ।
स्वान् गुणान् प्रकटयत्यनारतं तन्न कस्य सुखदायि भेषजम् ॥

---

(ग्रन्थारम्भः)

तत्रासौ रसः किमात्मा, किमधिकरणः, कति संख्यश्चेति त्रिविधो विचारः । ननु रस एवासिद्धः ; किमाश्रयो विचार इति चेत्, न । "रसो रसः, शृङ्गारो रसः, वीरो रसः, करुणो रसः" इति सामान्यविशेषाभ्यां व्यवहारतः तत्सिद्धेः । तथाहि —

[3]रसे रसे तन्मयतां गतस्य गुणे गुणे हर्षवशीकृतस्य ।
विवेकसेकस्वकभावभिन्नं मनः प्रसूतेऽङ्कुरवत् कवित्वम् ॥

---

1. कस्यास्य (क)
2. परस्य (ख)
3. रसत्वाश्रयतां गतस्य (क) रसे रसे त्वाश्रयतां गतस्य (ख)

श‍ृङ्गारो [1]रसभृङ्गारस्तस्याः सौन्दर्यवीरुधः ।
कर्णमारोप्यतां देव [2]वार्ताविस्मयपल्लवः ॥

अनुद्भिन्नो गम्भीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥

दृष्टिर्जगत्त्रयतृणीकृतसत्वसारा धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकीटगिरिवद् गुरुतां दधानो वीरो रसः किमथ [3]एत्युत दर्पएव ॥ (इति)

भ्रान्तोऽयं व्यवहार इति चेत्, न; तत्र सादृश्येन्द्रियदोषाद्यभावात्, बाधकाभावाच्च । भ्रान्तिर्नाम— " अतस्मिन् तन्मतिः " ; सा च विभावानुभावव्यभिचारिसंयोगान्निष्पन्ने, तथा स्वेनानुभूयमाने रसात्मनि कथमवकाशमासादयेत् । लौकिकानामत्यन्ताभ्युत्पन्ने[4] लोकोत्तरसहृदयजनहृदयैकसाक्षिणि सद्यः परां निर्वृतिमावहति । विभावादि[5]जीविताबधौ चमत्कारकरणस्वभावे ब्रह्मास्वादसब्रह्मचारिणि असदृशे रसभावे न केनापि सादृश्यमस्ति, येन भ्रान्तिसम्भावनापद[6]मधिरोहति । तद्वदेवेन्द्रियदोषोऽपि, न खल्वेक एव रसस्य भावमपरोक्षयति, यस्येन्द्रियदोषेण भ्रान्तिः स्यात् । किन्तु, अनेकेषा[7]मवधानानामन्योन्यसाक्षित्वेन एकं रसं रसयतां सहृदयानामिन्द्रियदोषप्रसञ्जनं प्रसञ्जयितुरेव भ्रान्तिं प्रथयति । कः खलून्मत्तादन्यो महाजनस्य भ्रान्तिं प्रकल्पयेत् ।

तत एव[8] बाधोऽपि न सम्भवति; सादृश्येन्द्रियदोषाभ्यां प्राप्तस्यैव बाधोपपत्तेः । भ्रान्तिरपि खलु न निर्विषया; अत्यन्ताभावप्रतियोगिनो ग्रहीतृभावात्;

---

1. श‍ृङ्गाररसभृङ्गारः तस्य (क)
2. हितं विस्मयपल्लवम् (ख)
3. वाऽच्युतदर्प एव (क, ख)
4. अभ्युत्पन्न लोकोत्तर (ख)
5. जीविते (ख)
6. पदवीम् (ख)
7. अवधानवतामन्योन्य (ख)
8. एवम् (ख)

भ्रान्त्यापि यत्रक्वचन प्रतीतस्यैवावगमः । न खल्व[1]ननुभूत[2]रजतस्वरूपः शुक्काविदं रजतमिति भ्राम्येत् । नापि यथोक्तलक्षणो रसोऽन्यत्र गृहीतः ; येन भ्रान्तोऽयमित्युच्यते[3] ।

किञ्च केषामसिद्धो रसः ? किं रसिकानां, प्राकृतानां वा ? रसिकानां रसोऽसिद्ध इति, वचनव्याघातः । प्राकृतानामसिद्धत्वम्, अलौकिकप्रसिद्धस्य भूषणमेतत्, न दूषणम् ; इत्यलमतिप्रसङ्गात् । प्रकृतमनुसरामः ॥

वैशेषिकतन्त्रे द्रव्यगुणकर्मणां स्व (शब्दपरिहारेण अर्थव्यपदेश्यत्वमिव) [4]लौकिकरसनिष्पत्तिहेतूनां लौकिकस्थायिभावकार्यकारणसहकारिभूतानां पदार्थानां स्वशब्दपरिहारेण विभावानुभावव्यभिचारिभावव्यपदेश्यत्वं रसस्य अलौकिकत्वसिद्धये स्वसमयेन कविभिः व्यवस्थापितम् ।

अतो विभावादिपदव्यवहार्यकारणाद्यभिव्यक्तः श्रोतृप्रेक्षकाणां वासनात्मतया स्थितमनोविकारलक्षणः स्थायीभावो रसः ।

उक्तं च काश्मीराधिपतिना—

कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥

विभावा अनुभावाश्च[5] कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥ इति ॥

ननु, मानसविकारात्मको भावो विभावादिनिष्पन्नस्वाद्यत्वशरीरो रसतया अनुभूयत इति, भवतामाकूतम् । न वयमात्मनो बुद्ध्यादिव्यतिरेकेण[6] आन्तरं विकारात्मकं तत्त्वं बुद्ध्यामहे (—इति चेत्), [7]अतिरिच्यते, सर्वस्यात्मव्यतिरिक्तस्य

1. अननुवृत्तरजतस्वः (क)
2. (न खल्वनेनुवृत्तरजतस्वंनापि), न खल्वननुवृत्तरजतस्वरूपः अननुभूतरजतस्वरूप (ख)
3. उच्यते (ख)
4. लौकिकनिष्पत्ति (ख)
5. स्तत्कथ्यन्ते (क)
6. णान्तम् (क)
7. अतिरिच्यते इति नास्ति (ख)

वस्तुनः परिणामोऽस्तीत्यवगतं तावत् । न च मनो विक्रियते; अन्यानि विक्रियन्ते, परिणामिनीत्यपीति नियमे कारणमस्ति; नापि मनोविकारोऽत्यन्तमप्रसिद्धः —

"भवति मम विकारः कोऽपि दृष्टेषु तेषु
द्रव इव हृदयस्य [1]प्रस्तरोद्भेदयोग्यः ।"

"विकारहेतावपि विक्रियन्ते
येषां न चेतांसि त एव धीराः ।"

"आर्द्रदयरयुन्मुखकृष्णसारा
दृष्टा चिरात्पञ्चवटी मनो मे ।"

"स्मरणमपि कामिनीनामलमिह मनसो विकाराय ।"

इत्यादीनां परसहस्रप्रयोगाणां दर्शनात् ।

न च मानसविकारस्य भावशब्दो वाचक इत्यप्ययुक्तं, "विकारो मानसो भाव" इति नामानुशासनात् । किञ्च "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति" रिति श्रुतेश्च । सिद्धयोरात्ममनसोर्नास्ति रसत्वं; साध्यस्यापि बुद्ध्यादेः स्वसिद्धौ विभावादित्रितयनिरपेक्षस्य कथमिव रसता संभाव्यताम् । तस्मात्, य आत्मादिव्यतिरिक्तो विभावादिसव्यपेक्षः स्वाद्यते; स [2]भावशब्देन वाच्यो मानसविकारोऽभ्युपगन्तव्यः; यस्योत्कर्षो रसः स्यात् । उक्तं हि —

बाह्यार्थालम्बनो यस्तु विकारो मानसो भवेत् ।
स भावः कथ्यते सद्भिः तस्योत्कर्षो रसः स्मृतः ॥ इति ।

ननु सिद्ध्यत्वेवं कामम् आन्तरो मानसविकारो भावशब्दवाच्यः, तदुत्कर्षरूपोऽपि रसः; तथापि, तस्य असुखरूपत्वेन अपुरुषार्थत्वात् प्रेक्षावतां तत्र प्रवृत्तिर्न भवेत्; न खलु मनोविकारमात्रं, तदुत्कर्षमात्रं वा सुखं प्रतियन्ति सन्तः; प्रत्युत, तस्यासुखरूपत्वमेव निश्चिन्वन्ति । उन्मादापस्मारादौ तस्य दुःखात्मत्वश्रुतेः । न खलु पुरुषस्य दुःखादतिरिच्यते व्याधिः, यदुक्तं — **दुःखसंयोगाद्व्याधिरिति** ।

1. प्रसरो (ख)
2. भावशब्दवाच्यः (ख)

आस्तां तावत् तथाभूतस्य रसस्य स्पृहणीयत्ववार्ता[1]; परिहरणीयत्वमेवाग्रतः प्रत्यवतिष्ठते। ततश्च तथाभूतेन रसेन रसवतः काव्यस्य अलङ्कारजातस्य च दवीयस्युपादेयता[2]; अनुपादेयत्वे च काव्यस्य तदुत्पत्तिहेतोः शक्तिनैपुण्याभ्यासरूपस्य क्षेमेन्द्रप्रणीतशिलाशतकस्य च वैयर्थ्यं स्यात्; किञ्च मायारूपत्वान्मनसः तत्तद्विकारस्य प्यमाननीयत्वात्, मानसविकारनिवृत्तिरेव परमपुरुषार्थः। तथाच, मनोविकारादव्यतिरिक्तस्य भावोत्कर्षस्य रसतां प्रतिजानन्, अपहास्यतामेवात्मनि सन्दध्यात्।

न चैतद्वाच्यं, सत्त्वरजस्तमोमयत्वान्मनसः सत्त्वरजस्तमसां विकारः; तस्यैव सुखात्मकत्वात्, पुरुषार्थभावान्न भ्रश्यतीति; विचारासहिष्णुत्वात् —

तथाहि — मनः खलु अबाह्यमिन्द्रियं[3], तच्च सत्त्वादिसहितमेवेन्द्रियभावमनुभवति। तथा, गन्धादिसहितमेव पार्थिवादिद्रव्यं, तथाभूतं च तदिन्द्रियं कथं नाम सुखस्वभावं स्वात्मानमेव सत्त्वं गृह्णीयात्? एकस्य ग्राह्यग्राहकत्वानुपपत्तेः। तस्मात्, काव्योपादेयतामिच्छद्भिः, मनोविकारोत्कर्षव्यतिरेकेण अन्य एव रसो वाच्य इति चेत्,

तत्रोच्यते —

इह खलु सर्वत्र द्विविध एव रसः श्रूयते — भूतप्रभवो, मनःप्रभवश्चेति। तत्र भूतप्रभवो — मधुरादिः, मनःप्रभवः — शृङ्गारादिः। न चानयोः सुखस्वभावत्वाभावापराधेन न पुरुषार्थत्वम्। न च नास्ति शृङ्गारादेः सुखसाधनत्वम्। दृश्यते हि — तर्कव्याकरणाभिधानकोशकलाचतुर्वर्गसङ्ग्रहनिपुणाः प्रतिभाभियोगव्युत्पत्तिभिः आत्मानं पात्रीकुर्वन्तः, पुरुषार्थविवेचनपराः, काव्यमुत्पादयन्तो महाकविप्रबन्धाननुसन्दधानाः, रसयन्तश्च [4]शृङ्गारलीनलौकिकसुखास्वादेन मोक्षस्यापि व्यर्थतामापादयन्तः, तृतीयमपि पुरुषार्थं बहुतृणं मन्यमानाः, महाजनाः योगिनोऽपि, युक्तावस्थायां

---

1. स्पृहणीयस्य वार्ता। (ख)
2. द्वयस्यानुपादेयता। (ख)
3. मनः खलु अणुपरिमाणमिन्द्रियम्। (ख)
4. शृङ्गारादीन् अलौकिक। (क)

साक्षात्कृतपरब्रह्मसागरप्रकटमोदलहरीपरम्पराप्रहारमूर्च्छनः [1]प्रवयःकातरा अपि अर्थानां अनन्तप्रसङ्ख्यानयोग्यतां चेतसः काव्यार्थभावनास्वादेन सम्पादयन्तो विलोक्यन्ते।

किञ्च, नाटकप्रमुखान्यपि रूपकाणि महता प्रयत्नेन शृङ्गारादीनुल्लास्य, तन्मुखेनैवास्वादापरपर्यायं परमानन्दं परिष्फुलयेषु तन्वन्ति । मन्दधियस्तु तान्यपि व्युत्पत्तिमात्रफलानीति मन्यन्ते ।

उक्तं हि —

आनन्दनिष्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः ।
योऽपीतिहासादिवदाह साधुः तस्मै नमः स्वादुपराङ्मुखाय ॥ इति ।

नाट्यस्य सर्वलोकानुरञ्जकत्वमपि [2]रसायत्तमेव । यदुक्तम् —

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम् ॥

काव्यार्थश्च आनन्दहेतुरिति सुप्रसिद्धम्[3] । न खलु रसादन्यस्य काव्यार्थस्य आनन्दहेतुत्वं सम्भवति ; यथोक्तवर्णसन्दर्भपदपदार्थवाक्यार्थप्रतिबन्धस्यापि निबन्धनस्य रसशून्यस्य निर्वृतिकरत्वाभावात् । रसं प्रति [4]गुणीभूतस्य अयथायथावर्णादेरपि प्रबन्धस्य सहृदयजनमनोरसायनत्वाच्च जानीमः, "काव्यार्थेषु रस एवानन्दका"रीति । ततश्च, कृतधियो रसानन्दयोर्हेतुहेतुमद्भावेन अभेदमेवाध्यवस्यन्तोऽलौकिकसुखास्वादस्यैव रसत्वमुपदिशन्ति । यदुक्तम् —

तत्प्रेक्ष्यं पश्यतां श्राव्यं सम्यग्भावयतां हृदि ।
अलौकिकसुखास्वादो रस इत्यभिधीयते ॥

---

1 प्रलयकातराः व्यूढानन्तरं प्रसङ्ख्यान । (क)

2. रसावियुक्तमेव । (ख)

3. सुप्रसिद्धः । (ख)

4. द्विगुणीभूत । (ख)

काव्यार्थेषु वाच्यलक्ष्यव्यङ्ग्यात्मकेषु व्यङ्ग्यस्य रसस्य मुख्यत्वप्रसिद्धिरपि आनन्दकारित्वादेव। "मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः"। "न हि रसादृते कश्चिदर्थ उपपद्यते" इति च (उच्यते)। तत्र रसो मुख्य एवावधार्यते।

नचानन्द एव रसः। तस्य ब्रह्मत्वेन विभावादिभिः अनिषिद्धत्वाच्च[1] "आनन्दो ब्रह्मे" ति श्रुतेः। "अनुद्विग्नो गभीरत्वा" दित्यादौ रसस्य दुःखात्मकत्वश्रुतेः, स्मृतेश्च। यदि दुःखात्मकोऽपि रसः; कथं तस्य सुखसाधनत्वमिति चेत्, नायं दोषः; अचिन्त्यत्वाद्धेतुफलभावस्य।

यद्विस्मयस्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत।
तत्सन्निधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते॥

इति, शृङ्गाररसेऽपि दुःखस्य प्युपलब्धेः। आनन्दस्वभावत्वं रसस्य सर्वथा न वचनीयम्; अपि त्वानन्दहेतुत्वमेव। न खलु मनोविकारः स्वाप्युत्कृष्टो वाप्यानन्दरूपो भवति। रसश्च मानसविकारोत्कर्षात् न व्यतिरिच्यत इति कथं तस्य आनन्दस्वभावत्वम्?

परमार्थतो नान्तःकरणवृत्तिरेव सुखं, किन्तु तत्प्रतिबिम्बितं चैतन्यमेव। [2]चैतन्यमात्मा, आत्मा च सुखं, "आत्मैव सुख" मित्यादि श्रुतेः, "यदर्थं सर्वं यच्च नानार्थं तत्सुख" मित्यस्य सुखलक्षणस्य आत्मन्येव पर्यवसानाच्च। आत्मनो नित्यत्वेऽपि, सुखस्यानित्यत्वप्रतिभासः, तद्वृत्तीनामनित्यत्वात्। सुखस्य वृत्तीनां कारणान्वयव्यतिरेकानुविधायित्वात् [3]सुखेऽपि तत्प्रतिपत्तिर्न युक्ता। तत्रादौ इन्द्रियसंप्रयुक्ते स्रक्चन्दनवनितादिविषये प्रसन्ना वृत्तयो जायन्ते। प्रसन्नासु तासु वृत्तिषु प्रतिबिम्बितं चैतन्यमेव स्वर्गसुखतयाऽनुभूयते। प्रसादतारतम्यात् सुखतारतम्यं, प्रसादतारतम्यं च विषयसौन्दर्यतारतम्यादिति स्थितिः।

तत्र य एव लोके स्थायिभावस्य कारण-कार्य सहकारिणः पदार्थाः, त एव

---

1. अनिषिद्धत्वात् तच्चानन्दो पा० (क)
2. सचैतन्यम् – पा. (ख)
3. दुःखेऽपि – पा० (ख)

काव्यनाटकादौ सुकविना प्रतिपाद्यमानाः लोकोत्तरतामवगाहन्ते । स खलु शब्दस्य कोऽपि महिमा, येन लौकिका अपि भावास्तदभिधेयदशामाविशन्तो लोकोत्तर-चमत्कारकारित्वेन अलौकिकास्सम्पद्यन्ते । अत एव तेषां कारण - कार्य - सहकारि-भूतानां पदार्थानां अलौकिकैरेव विभावानुभावव्यभिचारिपदैर्व्यपदेश्यत्वं, ये चात्यन्त-मलौकिका विभावादयो नाट्यकाव्ययोर्गोचरीक्रियमाणाः स्वसौन्दर्यातिशयाच्छ्रोतृ-प्रेक्षकाणां वासनात्मिकायां स्वाभिव्यञ्जितायां भावलक्षणायां वृत्तौ प्रसादातिशयं निदधति । निरतिशयप्रसादमहितायां तस्यां स्वात्मानन्दः स्वयं प्रथते, "ते भूमा यो वै भूमा तत्सुख" मिति श्रुतेः । भावस्य चायमेवोत्कर्षः, यदत्रानन्दसंविन्मयः स्वात्मा परिस्फुरति ।

भावोत्कर्ष एव रसः तस्यैव स्वाद्यत्वात्, स्वाद्यस्यैव सर्वत्र रसत्वमिष्टं, यतः स्वादश्चानन्दोद्भवः । यदुक्तम् — "स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः" इति; स्वाद्यविषया संविदपि स्वादरूपैवेति भावोत्कर्षस्य स्वादगोचरत्वलक्षणं स्वाद्यत्वमयत्नसिद्धम् । तथाहि - वृत्तौ प्रतिबिम्बितं चैतन्यमेव - आनन्दः, आनन्द एव स्वादः, स्वादश्च स्वयंप्रकाशो वृत्तिमपि प्रकाशयति । इदमेव वृत्तेः स्वाद्यत्वं, यदियं स्वादे प्रकाशमाने स्वयमपि प्रकाशते; अन्यथा तत्संभवे प्रमाणाभावात् तदसिद्धिरेव वृत्तिः स्यात् । यथा वृत्तेरिव वृत्त्युपहितरूपस्य आनन्दस्य स्वाद्यत्वं, तथा वृत्तेरप्युपाधिभूताया उपहितानन्दस्यैव स्वयंवेद्यमानत्वं, आनन्दस्वभाववत्वं च वृत्ति—वृत्तिमतोरैक्याध्यासात् सिद्धम् । ततश्च युक्तैवेदं वाचोयुक्तिः, "आनन्द-संविद्रूपो रसः" इति ।

अतो रसं रसयन्तो रसिकाः शब्दब्रह्ममुखेन परब्रह्मैव अनुभवन्तीति तेषां युक्तं — "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इति । तस्मात् यथोक्त-दोषाभावात् रसः पुरुषार्थ एवेति सर्वमनवद्यम् ।

अत्र यद्यपि अनुभावा व्यभिचारिणश्च, लौकिकस्य स्थायिभावस्य कार्यत्वेन, सहकारित्वेन क्रमात् प्रसिद्धाः, तथापि अलौकिकरसनिष्पत्तौ भावस्य स्वाद्यत्वैक्यहेतवो भवन्तीति, तेषां विभाववत् कारणत्वमेव । यदुक्तम्—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः [1]स्वाद्यत्वं स्थायीभावो रसः स्मृतः ॥ इति ।

मुनिनाप्युक्तम्—

" विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति " । तन्नास्त्येव क्वचिदपि-प्रेक्ष्यं, श्राव्यं वा; यद्विभावादिषु नान्तर्भवति । तेन विभावादिसूत्रे सात्त्विकादीनां भावानां न पृथङ्निर्देशः; तेषामनुभावेष्व[2]न्तर्भावात् । विभावादेः संयोगोऽपि भावकचित्तान्तर्भाविनी वृत्तिरेव । न खलु तेषां रसं प्रति सन्निधानहेतुत्वम् । किं तर्हि ? भाव्यमानत्वेनैव; यतो भाव्यमाना एव विभावादयो भावकानां वासनात्मतया स्थितस्य स्थायिभावस्य स्वाद्यतामापादयितुमीशते; नान्ये । न तावद् यथाजातस्य रसस्य निष्पत्तिः, अपितु व्युत्पन्नस्यैव । व्युत्पत्तिश्च यथोच्यते —

छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात् ।
युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन " ॥ इति ।

अयमाशयः— यो हि, लोके स्थायिभावस्य कार्यकारणसहकारीणि अन्वय-व्यतिरेकाभ्यां विदित्वा, भूयोभूयः स्वात्मन्यप्यनुसन्धत्ते, तस्यैव छन्दोव्याकरणादिविज्ञानात् साहित्ये परां निपुणतामुपारूढस्य लोकवृत्तानुसन्धानाभ्यासगृहीतपाटवस्य वासनात्मतया स्थितः स्थायिभावो नाट्यकाव्ययोस्तैरेव कारणादिभिर्विभावादि-शब्दव्यपदेश्यैः अन्तर्विपरिवर्तमानैः अलौकिकास्वादगोचरतामानीयमानो रस इत्यु-च्यते - इति । तथाचोक्तम् —

कुण्ठत्वमायाति[3] गुणः[4] कवीनां साहित्यविद्याश्रमवर्जितेषु ।
कुर्यादनार्येषु[5] किमङ्गनानां केशेषु कृष्णागरुधूपवासः ॥

ननु यदि विभावादीनां संयोगाद्रसनिष्पत्तिः; कथं पुनः—

1. स्वादुत्वम् (ख)
2. भावेऽन्तर्भावात् (ख)
3 आयान्ति (ख)
4. गिरः (ख)
5. अनार्द्रेषु (ख)

वियदलिमलिनाम्बुगर्भमेघं
मधुकरकोकिलकूजितैः दिनश्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का
प्रणतिपरे दयिते प्रसीद मुग्धे ॥

इत्यादौ केवलविभावात्,

परिमृदितमृणाली म्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु[1] ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीं
अभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥

इत्यादौ केवलानुभावात्,

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने [2]सङ्कुञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बास्पाम्बु[3]पूर्णं क्षणात्
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥

इत्यादौ के[4]वलेभ्य औत्सुक्यव्रीडाहर्षकोपासूयाप्रसादरूपेभ्यो व्यभिचारिभ्यो रसनिष्पत्तिश्च[5] ।

अत्रोच्यते—

तत्रापि, तस्यापि विभावस्य, अनुभावस्य, व्यभिचारिणां च असाधारणत्वेन अन्यतमद्वयापेक्षकत्वे सिद्धे, नास्त्येव कैवल्यम् । तथा काव्योत्पत्तेः कवीनां प्रतिभाऽभियोगव्युत्पत्तय इव, रसनिष्पत्तेः विभावानुभावव्यभिचारिणो हि हेतुः; न तु हेतवः ।

---

1. कथासु (ख)
2. किञ्चाञ्चित (ख)
3. पूर्णेक्षणम् (ख)
4. केवलौत्सुक्य (ख)
5. (च) नास्ति (क) पुस्तके

तत्र यदि विभावमात्रं, अनुभावमात्रं, व्यभिचारिमात्रं वा औचित्यानुसारेण रसनिष्पत्तिहेतुत्वेनोपन्यस्तम्; तथापि तस्य असाधारणत्वेन [1]भावकानामभ्यासपाटवाच्च [2]तेन व्याप्तं अन्यतमद्वयमपि चित्तान्तर्विपरिवर्तत एवेति, युक्तैव तत्संयोगाद्रसनिष्पत्तिः।

[3]एतदुक्तं भवति:—विभावादिभिः वीररसे निष्पाद्ये, वैरूप्यस्य विभागमात्रस्य ग्रहणेऽपि न साध्यसिद्धिः; तस्य भयानकेऽपि तुल्यत्वात्। तेन यदि वीररसानुगुणा अनुभावव्यभिचारिणश्चाक्षिप्यन्ते, तदा तत्साधनस्य तस्य रसान्तरेभ्यो व्यावृत्तेः, प्रस्तुतनिर्वहणशक्तिः निर्विचारं क्रमते। तथा वैरूप्येणैव विभावेन भयानकरसानुगुणा अनुभावा व्यभिचारिणश्च यदाक्षिप्यन्ते, तदा, तत्सहितस्य तस्य अन्यव्यावृत्ततया निर्विवादं भयानकनिष्पत्तिं प्रति हेतुत्वम्। अयमेव प्रकारोऽनुभावव्यभिचारिष्वपि द्रष्टव्यः।

नन्वेवमपि[4] अभीष्टरसा[5]सिद्धिरेव, एकेनैव विभावेन रसद्वयानुभावव्यभिचारिणामाक्षेपेण प्रस्तुताप्रस्तुतयोरपि रसयोर्निष्पत्तिप्रसङ्गात्। तन्न। आक्षेपकेऽपि विभावादौ कोऽपि विशेषः कविकौशलादिना सन्निधत्ते; यस्मिन् सति विभावाद्यन्यतमः प्रस्तुतरसानुगुणमेवाक्षिपति; यस्मिन्नसति साधारणत्वेनाप्रस्तुतमप्याक्षिपन् रसान्तरमपि ध्वनयति।

यद्येवं तेनैव विशेषण विभावादिष्वेक एव रसविशेषं निष्पादयतु, किमाक्षिप्तेन अन्यतमद्वयेनेति चेत्:—

तस्य आक्षेपकगतस्य विशेषस्य प्रस्तुतरसानुगुणान्यतमद्वयस्याक्षे[6] एव सामर्थ्यं नान्यत्रेति, तेन रसविशेषसिद्धिः।

परिभवति[7] रतिं मतिं लुनोते, स्खलति भृशं परिवर्तते च भूयः।
इति बत विषमा दशास्यदेहं परिभवति प्रसभं किमत्र कुर्मः॥

---

1. वियोग (क)
2. तेन तेन व्या (ख)
3. तदुक्तम् (ख)
4. नाभीष्ट – पा० (ख)
5. रससिद्धिरेव – पा० (ख)
6. आचरण एव – पा० (ख)
7. परिहरति – पा०

इत्यत्र यथोक्तविशेष[1]विरहादेव रतिपरिहारादिरूपोऽनुभावः, शृङ्गारानुगुणौ विभावव्यभिचारिणावाक्षिप्य शृङ्गारमुद्भावयन्नपि, करुणस्यापि साधारणत्वात् तदनुगुणविभावं व्यभिचारिणश्चाक्षिपन्, करुणमपि ध्वनयति । अतएव कामिनीरूपो विभावोऽयं यत्नेन प्रतिपाद्यत इति, अस्य क्लिष्टकल्पना[2]व्यञ्जितविभावत्वं नाम रसदोषः । ततश्च यथोक्तविशेष[3]संयुक्ता विभावादयः केवला अपि, प्रत्येकं प्रकृतानुरूपं स्वान्यतमद्वयमाक्षिपन्तः सहृदयहृदयान्तर्विपरिवर्तमाना रसं निष्पादयन्तीति, तत्संयोगो निरुपपादः ।

विभावानुभावव्यभिचारि[4]साकल्यलक्षणसामग्रीसंभवात् प्रबन्धेष्वेव रससाम्राज्यम् । अन्यत्रापि मुक्तकादावुक्तसामग्र्यभावेऽपि कल्पितविभावादिवशेन रसपरिपोषः । यदुक्तम्—

"समग्रवर्णनाधानप्रबन्धेनैव सत्कवेः ।
प्रायो रसः परां पुष्टिं तनोतीति विदो विदुः ॥
न विभावानुभावानां सात्त्विकव्यभिचारिणाम् ।
मुक्तके सर्वसंपत्तिः; किं तु काल्पनिकी भवेत्" ॥ इति

सर्वत्र रसनिष्पत्तिर्विभावाद्यन्वयव्यतिरेकानुविधायिनी दृष्टा । मुक्तकेऽप्यस्त्येव रससंपत्तिः,[5] तेन न ज्ञायते तस्यापि विभावादिहेतुत्वं, यतः तेषामन्योन्याभिव्याप्तानां एकप्रतीतावन्यतमद्वयस्य नान्तरीयकतया समन्वयः । यत्तु क्वचिद्विभावादिष्वन्यतमस्य प्राधान्यं कैश्चिदुक्तं, तत्, तदितरद्वयाक्षेपकत्वसामर्थ्यान्निर्धारणादि[6]ति बोद्धव्यम् । अन्यथा तत्र तत्र अन्योन्यव्यभिचारेण रसनिष्पादने प्रत्येकमुपात्तानां विभावादीनामन्यतमस्य प्राधान्यं दुरुक्तमेव स्यात् ।

---

1. विशेषण (ख)
2. व्यञ्जितेति नास्ति (ख)
3. विशेषणयुक्ताः (ख)
4. साकल्येति न (ख) पुस्तके
5. रससम्पत् । (क)
6. न (क)

विभावप्रधानं यथा—

उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरपेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥

अनुभावप्रधानं यथा—

स्तनद्वन्द्वं मन्दं स्नपयति बलाद्बाष्पनिवहो
हठादन्तःकण्ठे लुठति सरसः पञ्चमरवः ।
शरज्ज्योत्स्नापाण्डुः पतति च कपोलः करतले
न जानीमस्तस्याः क इव हि विकारव्यतिकरः ॥

यद्यपि विभावानुभाव[1][व्यभिचारिणः सममेव समुत्स्थापयन्ति, तथाप्यात्मीयविभावानुभावपरिष्कृतेभ्यो व्यभिचारिभ्यो रसं प्रति भूयानुपकारः । उक्तं हि—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारो हि तथा भूयसि वर्तते ॥ इति ।

न च] व्यभिचारिणां स्थायित्वाभावापराधात् रसत्वमेव नास्ति; विभावानुभावौ कुतस्त एव । यदुक्तम्—

स्वविभावानुभावानां द्वारेण व्यभिचारिणाम् ।
स्थाय्याश्रितानां प्राधान्यं (अभिज्ञैः परिकीर्त्यते) ॥ इति ।

विभावद्वारेण व्यभिचारिप्राधान्यं यथा—

अञ्जलौ जलमधीरलोचना लोचनप्रतिशरीरपूरितम् ।
आत्तमात्त[2]मचिरान्तमुक्षितुं[3] कातरा शफरशङ्कया जहौ ॥

अत्र त्रासः ।

---

1. कुण्डलितो ग्रन्थः (ख) नास्ति ।
2. मोद । (ख)
3. उत्थितुम् । (क)

यद्विश्रम्य विलोकितेषु बहुशो न स्थेमनी लोचने
यद्गात्राणि दरिद्रति प्रतिदिनं लूना[1]ब्जिनीनालवत् ।
दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः
कृष्णे (दृष्टे) यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥

अत्र व्याधिः ।

अत्र विभावानुभावौ लोकसिद्धावेव । यदुक्तम्—

"हेतुकार्यात्मनोः सिद्धिस्तयो[2]स्संव्यवहारतः" । इति

अपिचोक्तम्—

लोकप्रभावसंसिद्धा लोकयात्रानुगामिनः ।
अनुभावा विभावाश्च ज्ञेयास्त्वभिनये बुधैः ॥ भरत VI. इति ।

प्रसिद्धं लोके रत्यादेः स्थायिभावस्य कारणं, कार्यं च । तत्र कारणं प्रमदादिः, कार्यं कटाक्षादिः ; तावेव काव्यनाट्ययोः विभावादिव्यापारात् विभावानुभावाभ्यां निर्दिश्येते । तत्र विभावो ज्ञायमानत्वेनैव भावकानां भावं पुष्णाति ।

यदुक्तम् – "ज्ञायमानतया [3]यत्र विभावो भावपोषकृत् ॥" इति ।

विभावः —

इदमेव विभावस्य विभावत्वं नाम, यदनेन विभाव्यते – उत्कर्षं नीयते भावकानां भावः ।

अत्र मुनिः —"विभावो नाम विज्ञातार्थः, विभावः कारणं निमित्तं हेतुरिति पर्यायः ।" विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इति विभावः । यथा– विभावितं विज्ञातमित्यनर्थान्तरम् ।

अत्र श्लोकः—

बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः ।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥ इति ।

---

1. दूनाब्जिनी । (क)
2. सुव्यवहारतः ।
3. तत्र । (ख)

विभावश्च [1]द्विविधः — आलम्बनविभावः,[2] उद्दीपनविभावश्चेति ।
आलम्बनविभावो यथा —

विपुलं नितम्बबिम्बे मध्ये क्षामं समुन्नतं कुचयोः ।
अत्यायतं नयनयोः मम जीवितमेतदायाति ॥

उद्दीपनविभावो यथा —

ककुभां मुखानि सहसोज्ज्वलयन् दधदाकुलत्वमधिकं रतये ।
उददीपदिन्दुरपरो दहनः कुसुमेषुमित्रमत्रैर्नयनप्रभवः ॥

अनुभावो नाम — लोके कारणादुत्पन्नस्य स्थायिभावस्य [3]भूयशो विकारः कटाक्षादिः कार्यलक्षणः । तदुक्तम् —

अनुभावो विकारस्तु भावसंसूचनात्मकः — इति ।

सोऽपि विकारत्वाद्विभावादनुभूयमान एव भावपोषकृदिति वेदितव्यम् । विभावनिष्पन्नान् भावान् अनुभावयति — स्वाद्यतां नयतीति अनुभावः । इदमेवानुभावस्यानुभावत्वं, यदयमनुभूयमानो भावकानां भावेषु स्वाद्यतालक्षणमुत्कर्षं विदधाति । अत्र मुनिः —

"यदयमनुभावयति नानार्थान् विभावनिष्पन्नान् वागङ्गसत्वकृताभिनयान्" इति । अत्र श्लोकः—

वागङ्गाभिनयेनैव यस्मात्त्वर्थोऽनुभाव्यते ।
शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततस्स्मृतः ॥ इति ।

अनुभावो यथा —

स्तिमितविकसितानामुल्लसभ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किञ्चिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥

---

1. यथाविधि । (क, ख)
2. अनुभावनामक उद्दीपन । (क, ख)
3. सूचक. पा०

एवं च विभावानुभावयोः साक्षाद्भावकानुभावकर्मतया भावोत्कर्षहेतुत्वं साधर्म्यमित्युक्तं भवति । अयं तु विशेषोऽनुभावस्य — यदयं लोके कार्यत्वेनापि य आत्मनीनकार्ये कारणत्वमापन्नोऽनुभावनाव्यापारेणानुभावशब्दवाच्यः स्थायिभावान् भावयतां सामाजिकानां भावसंसूचनाश्रुरोमाञ्चादिविकारलक्षणकार्यरूपोऽपि सद्भावं पोषयति । लक्षयन्ति हि प्राकृता अपि, रसिकानां सन्ततप्रसरदानन्दजलबिन्दुदन्तुर-पुटानि लोचनानि समुन्मिषत्पुलकनिकुरम्बकरम्बितकपोलान्यपि मुखान्यवलोकयन्तो, नूनमेषां चेतसि कोऽपि चमत्कारकोरकितो विकारः प्रादुरस्ति । न चेत्कथं नाम ऐषामीदृश्यङ्गविक्रियेति[1] । यतो[2] विभावानुभावप्रतिपादनैकफलाः कविवाच्यविभावानु-भावप्रतिपत्तिमूलाः सकलस्थायिभावकलापस्य विभावानुभावोत्कर्षापादनद्वारेण रसमुप-चिन्वन्त्यलङ्काराः। विभावानुभावव्यभिचारिलक्षणाः — निखिला लोकयात्राः । तस्मात् , रसं रिरंसयिषुभिः प्रतिरसं विभावानुभावौ यथायथमादरादधिगन्तव्यौ । उक्तं हि —

विभावः कारणं तेषामुत्पत्तेर्जीवनस्य वा ।
बोधकस्त्वनुभावः स्याद्विज्ञेयौ तौ प्रयत्नतः ॥

हर्षादीर्ष्यादिसंभूतो बाष्पः स्याद्बहुहेतुकः ।
न विभावं विना शक्यो विज्ञातुं किं कुतोऽप्यसौ ॥

चित्तवृत्त्यात्मको भावः परोक्षः प्राणिनामिह ।
अनुभावं विना वक्तुं विज्ञातुं वा [3]क्षमोऽत्र कः ? ॥ इति ।

अत्र पूर्वाचार्यस्मरणं —

"भावोत्कर्षो रस इति मतस्तस्य हेतुर्विभावो,
बाह्यो योऽर्थः तदुभयगतो यो विकारोऽनुभावः ।
लक्ष्यश्चायं किमपि शिवयोर्दृष्टिसंभेदमात्र-
प्रोद्यत्प्रौढप्रणयबहुलाऽऽनन्दयोस्ताण्डवादौ ॥" इति ।

---

1. श्रृङ्गारविक्रिया । (क)
2. यतोऽपि । (क)
3. क्षमेत कः । (क)

व्यभिचारिणो हि लोके रत्यादेः स्थायिभावस्य सहकारित्वेन प्रसिद्धाः । कथमेषां स्थायिभावस्य सहकारित्वमिति चेत् ? ब्रूमः । ते खलु, तस्य तस्य स्थायिभावस्यानुभावान् यथास्वमनुप्रविशद्भिः समानधर्मैरात्मीयानुभावैः "वृद्धिस्समानैस्सर्वेषा" मिति न्यायात् अभिवर्धयन्तः, तैरप्यनुप्रविष्टा आत्मीयानुभावान् आत्मनैवोन्नीयन्तः स्थाय्यनुकूलविभावोत्पन्नतया स्थायिभावतामेव ते स्थायिन एवार्थे वर्तमानाः, तथा तथा तं तं रसमुपचिन्वाना विविधेन प्रकारेण रसं प्रत्यभिमुखीभूय चरन्ति । यथोक्तम्—

विविधं ह्याभिमुख्येन चरन्ति व्यभिचारिणः ।
स्वधर्मस्यार्पणेनैव स्थायिधर्मोपजीविनः ॥

माधुर्यादिषु धर्मेषु यथा दध्नो गुडादयः ।
यथास्वं निविशन्त्येते स्थायिनो व्यभिचारिणः ॥

अतस्सुखानुबन्धास्स्युर्ग्लानिप्रभृतयो रतौ ।
शोके दुःखानुविद्धाः स्युरिति सर्वत्र चिन्त्यताम् ॥ इति ।

अपि चोक्तम्—

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ ॥ इति ।

अयमाशयः —

यथायथं तैस्तैर्विभावैर्लब्धात्मभावाः सुखादिलक्षणैः धर्मैः अनुबद्ध्यमानाः स्वानुकूलविभावोत्पन्नैर्जलतरङ्गन्यायादात्मनस्त्वभिन्नैरेव आत्मविकारैर्निर्वेदादिभिस्समानधर्मैरेव बहुलीक्रियमाणाः, तैः सहैकत्वं पृथक्त्वं चावहन्तः स्वधर्मांस्तेषु निक्षिपन्तः तद्धर्मैरप्यात्मानमाप्याययन्तः स्वविभावबलासादितोत्कर्षद्वारेण रसतामापाद्यमाना लोके स्थायिभावाः परिदृश्यन्ते । तस्मात्,

स्थायिनोऽर्थे प्रवर्तन्ते भावास्सञ्चारिणो यथा ।

इति स्मृतेश्च, स्थायिसहकारित्वं व्यभिचारिणां भावानामुत्प्रेक्षामहे इति ।

अत्र मुनिः — "वि, अभि" इत्येतावुपसर्गौ । चर—गतौ धातुः । वागङ्ग-

सत्त्वोपेतानां प्रयोगे विविधानां रसानामाभिमुख्येन चरन्तीति – व्यभिचारिणः। तान्नयन्तीत्यर्थः ।

के ते व्यभिचारिणः ?

निर्वेदग्लानिशङ्काश्रम धृतिजडताहर्षदैन्यौग्र्यचिन्ता-
त्रासेर्ष्यामर्षगर्वस्मृतिमरणमदाः सुप्तिनिद्रावबोधाः ।
व्रीडापस्मारमोहास्समतिरलसताऽऽवेगतर्कावहित्था-
व्याध्युन्मादा विषादोत्सुकचपलयुतास्त्रिंशदेते त्रयश्च ॥

एषां प्रत्येकं विभावानुभावस्वरूपोदाहृतयो **दशरूपकाद्यलङ्कारेभ्योऽवगन्तव्याः**; नेह ग्रन्थगौरवभयाल्लिख्यन्ते ।

रसानां यथास्वं विभावानुभावव्यभिचारिणो रसभेदनिरूपणे वक्ष्यामः ।

व्याघ्रादयो विभावा भयानकस्येव, वीराद्भुतरौद्राणां अश्रुपातादयोऽनुभावाः, शृङ्गारस्येव करुणभयानकयोः चिन्तादयो व्यभिचारिणः । शृङ्गारस्येव करुणभयानकयोरिति पृथगनैकान्तिकत्वाद्विभावादिसूत्रे विभावादयो मिलिता निर्दिष्टाः । अत्र हेतुत्वे [1]सिद्धेऽपि विभावानुभावयोर्वाच्यत्वं; व्यभिचारिणामभिव्यञ्जितत्वमिति विवेकः ।

तद्व्यञ्जकाश्च यथायथं तद्विभावानुभावाः । स खलु वाच्योऽर्थो – यत्र शब्दस्य सङ्केतः । स खलु वाचकशब्दः — योऽर्थं साक्षादभिधत्ते । एवं च यद्यपि लज्जादिशब्दानां लज्जादयः सङ्केतिता वाच्याः, तथापि न तेषां वाच्यत्वविशेषेण रसहेतुत्वं ; किन्त्वभिव्यञ्जितत्वेन । एतच्च लज्जादिशब्दप्रयोगे हि तद्विभावाद्यप्रयोगः । तत्प्रतिपत्त्या रसानुत्पत्तेः, तदप्रयोगे तदभिव्यञ्जकविभावानुभावप्रयोगे तत्प्रतिपत्त्या रसोत्पत्तिरन्वयव्यतिरेकाभ्यामवधार्यते ।

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥

इत्यत्र विभावानुभावाभ्यामभिव्यज्यते लज्जा, या रसहेतुप्रतीतापि न सा रसहेतुः, या लज्जा शब्दवाच्या ।

1. तुल्येऽपि ।

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कान्यपि चकार लज्जया ॥

इत्यादौ यत्र लज्जाशब्दः प्रयुज्यते, तत्रापि स्वविभावानुभावव्यक्त्यैव लज्जाचमत्कारोऽपीति न स्वशब्दप्रत्यायिता, नाप्यकिञ्चित्करः तत्र लज्जाशब्दः, तस्यानुभावहेतुत्वात् ।

न केवलं व्यभिचारिण एवाभिव्यक्ततया रसनिष्पत्तिहेतवः; किन्तु सर्वेऽपि भावाः ।

उक्तं हि—यदान्योन्यार्थसंश्रुतैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाशद्भावैस्सामान्यगुणयोगेन अभिनिष्पद्यन्ते रसाः – इति ।

सात्त्विकानां भावानां भावत्वेऽपि अनुभावरूपत्वात् शब्दवाच्यत्वं युज्यत एव । अनुभावरूपत्वं च भावसंसूचनविकाररूपत्वात् । तेषां भावत्वमपि चित्तवृत्त्यात्मकत्वात् । उक्तं हि —

सत्त्वं नाम – साङ्ख्यप्रसिद्धं यत्तदात्मकम् ।

अपि चोक्तम् —— पृथग्भावा भवन्त्यन्येऽनुभावत्वेऽपि सात्त्विकाः ॥ इति ।

वेपथुः प्रलयः स्तम्भः स्वेदो रोमोद्गमस्तथा ।
स्वरभेदोऽश्रुवैवर्ण्यमष्टौ भावा हि सात्त्विकाः ॥

इत्येषां भावत्वाच्छब्दवाच्यत्वं [1]किन्नेष्यत इति चेत्; त एव भावाः प्रष्टव्याः—यूयं भावाः कुतश्शब्दवाच्या इति; वयं तु यथादृष्टप्रयोगोपपत्तिमात्रप्रधानपरतन्त्रा न पर्यनुयोगमर्हामः । शब्दवाच्यतायां उपपत्तिश्चानुभावरूपतयेत्यवादिष्म ।

पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां
शम्भोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने ।
ह्रीमत्या शिरसेरितः सपुलकस्वेदोद्गमोत्कम्पया
विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरा पातु वः[2] ॥

इत्यादौ सात्त्विकभावानां पुलकादिशब्दवाच्यत्वं के नानुमन्यन्ते ?

---

1. किं दूष्यते इति चेत् पा० (क, ख)
2. नः पा० (क, ख)

भावतुल्यन्यायतया रसस्यापि व्यङ्ग्यत्वमेव ; न वाच्यत्वम् । स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयते, तत्प्रयोगेऽपि, विभावाद्यप्रयोगेऽपि तस्यासंविदितत्वात्, तदप्रयोगेऽपि विभावादिप्रयोगे संविदितत्वाच्च, अन्वयव्यति-रेकाभ्यां विभावाद्यभिधानद्वारेण प्रतीयत इति निश्चीयते ।

तेनासौ व्यङ्ग्य एव न पुनर्लक्ष्यः । मुख्यार्थबाधाद्यभावात् । तत्र हि प्रभवति लक्षणा; यत्र मुख्यार्थबाधादिः । उक्तं हि काश्मीराधिपतिना —

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया ॥ इति ।

न च कान्तादिशब्दाः, कटाक्षादिशब्दाश्च, स्वार्थे स्खलद्गतयः, तत्कथमिव तेऽर्थान्तरं लक्षयेयुः ? यदि कश्चिद् ब्रूयात् —

रसस्तु शब्दान्वयव्यतिरेकानुविधायित्वाच्छब्दप्रमाणवेद्य एव ; अभिधा-लक्षणाभ्यामृते नान्योऽस्ति शब्दस्य व्यापारः [1]तेनायमभिधेयो, लक्ष्यो वा; न प्रका-रान्तरवानिति —

स इत्थं प्रष्टव्यः । गङ्गायां घोषः — इत्यत्र तटवत्तटगताः पावनत्वादयोऽपि धर्माः प्रतीयन्ते । तत्र कः शब्दस्य व्यापारः — इति । तत्र नाभिधा व्यापार इति वक्तुं युक्तम् । तटगतपावनत्वादौ गङ्गाशब्दो न सङ्केतितः । [2]नापि लक्षणेति । तद्धेत्वभावात्; मुख्यार्थबाधस्तत्संबन्धः प्रयोजनं चेति त्रयं तस्या हेतुः । न हि तटं मुख्यार्थो, यत्र बाधात् गङ्गाशब्दः प्रयोजनं लक्षयेत् । न चात्र बाधः । नापि लक्षितस्य तटस्य पावनत्वादिधर्मैः लक्षणीयैः सम्बन्धः । गङ्गाशब्देन[3] तटे लक्ष्ये न प्रयोजनान्तरं पश्यामः । को नाम सचेतनः, प्रयोजनमन्तरेण, सति मुख्ये लाक्षणिकत्वं प्रयुङ्क्ते । नापि गङ्गाशब्दः पावनत्वादिधर्मविशिष्टमेव तटं लक्षयेत् । अतो न विशिष्टे लक्षणा । लक्षिते तु विशेषाः । प्रयोजनप्रतिपिपादयिषया यत्र

1. न समभि पा० (क)
2. यतः, अतः कापि पा० (क, ख)
3. नैव पा०

लक्षणाशब्दः प्रयुज्यते, तत्र नान्यतः प्रयोजनप्रतिपत्तिः ; अपितु तस्मादेव शब्दान्न च न प्रतीयन्ते ।

गङ्गाशब्देन तटगताः पावनत्वादयो धर्माः प्रतीयन्ते (इति) अभिधालक्षणाभ्यामन्यद्व्यापारान्तरमवश्यमेषितव्यम् । न चात्र व्यञ्जनादृते व्यापारान्तरं प्रतीमः । उक्तं हि काश्मीराभिमतिना —

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥

नाभिधा समयाभावात् हेत्वभावान्न लक्षणा ।
लक्ष्यं न मुख्यं नाप्यत्र बाधायोगः फलेन नो ॥

न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥ इति ।

तस्मात्, अत्रापि विभावाद्यभिधायकैः शब्दैः व्यञ्जनाव्यापारेण रसो व्यज्यत एवेति वक्तुं न्याय्यम् ।

ननु "सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते" इति, अर्थानामपि व्यञ्जकत्वे, शब्दाभिहितैः तेषां तैः विभावाद्यर्थैरेव रसोऽभिव्यज्यतां, किमत्र शब्दस्य व्यापारान्तरापेक्षया इति चेत्, सत्यं । विभावाद्यर्थैरेवाभिव्यज्यते रसः ; तथापि, अर्थाभिव्यङ्ग्येऽर्थान्तरे शब्दोऽपि व्यापृत एव । यतः, सोऽप्यर्थाभिव्यञ्जकोऽर्थः शब्दप्रमाणकः । यदुक्तम् —

शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥

इति । इतरथा, येनकेनापि निबन्धने विभावादिप्रतिपादके न रसप्रतीतिः स्यात् । प्रतिरसं वर्णरचनाद्युपदेशश्च निरर्थको भवेत् । शब्दस्य रसं प्रति किञ्चित्करत्वे तद्व्यापारस्यापीष्टत्वात् । नित्याभिव्यङ्ग्ये तत्र शब्दस्य व्यञ्जनमेव व्यापार इति, रसस्य व्यङ्ग्यत्वं सिद्धम् ।

यद्यपि, "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः" इति रसादिशब्दानां स्वार्थपरता ; तथापि, तेषां रसादीनां परनिर्वृतिपर्यन्तापरोक्षसंवित्तिर्विभावादिप्रत्यय-

मूलैव; न वाचकशब्दनिमित्तेति रसादीनां शब्दवाच्यत्वम्, दुष्टत्वनिमित्तमित्युच्यते। उक्तं हि —

व्यभिचारिरसस्थायिभावानां शब्दवाच्यतेति। शब्दवाच्यत्वं यथा —

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः॥ इति।

अत्र व्रीडादीनां शब्दवाच्यत्वं चमत्कारविरह एव दोषः। चमत्कारविरहश्च व्रीडादिप्रतिपत्तिभावाद्यङ्गत्वं। यथा —

व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि।
मीलद्भ्रूम्सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः॥

इत्यत्र [1]तेषामेव शब्दवाच्यत्वं परिहृत्य, विभावानुभावव्यञ्जितानां प्रतिपत्तौ रसिकचेतस्सु कोऽपि चमत्कारः [2]समुल्लसत्येव। नापि रसस्यावाच्यत्वे शृङ्गारादिशब्दानां निरभिधेयत्वप्रसङ्गः, तेषां लौकिकरसवाचकत्वेनापि सार्थत्वात्। अलौकिकेष्वपि रसेषु तेषां लक्षणया वृत्तिः। इतरथा काव्यरसेषु शृङ्गारादिव्यवहारो न स्यात्। तथापि परनिर्वृतिपर्यन्ता तत्प्रतिपत्तिर्विभावादिप्रत्ययमूलैव, न च शृङ्गारादिशब्दनिमित्तेति, रसानां स्वशब्दप्रतिपाद्यत्वं दुष्टमित्युच्यते। उक्तं हि काश्मीराधिपतिना —

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता।
क्लिष्टकल्पनया व्यक्तिरनुभावविभावयोः॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः।
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः॥

1. दोषा एव। पा०
2. कोरकितो विकारः प्रादुरस्ति। पा०

अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥ इति ।

शृङ्गारादिशब्दानां केवलस्वार्थमात्रप्रतिपादनाय प्रयोगो दोषाय; विभावाद्युत्कर्ष-सिद्धये तु गुणायेति कवीनामाशयः । स्वार्थो यथा —

शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणैश्च भयकृन्मूर्त्याऽद्भुतस्तुङ्गया ।
रौद्रो दक्षविमर्दनेन हसकृन्नग्नः प्रशान्तश्चिरात्
इत्थं सर्वरसात्मकः पशुपतिर्भूयात् सतां भूतये ॥

अत्र शृङ्गारादिशब्दः, स्वार्थप्रतीत्यर्थं प्रयुक्तो, न च तं प्रत्याययतीति दोषः ।

विभावार्थो यथा —

शृङ्गारस्य गरीयसी परिणतिर्विश्वस्य सम्मोहिनी
विद्या काप्यपरा परा च पदवी सौन्दर्यसारश्रियाम् ।
उद्दामो मदनस्य यौवनमदः कुल्यारसः स्रोतसां
केलीविभ्रमसम्पदामविकलो लावण्यपण्यापणः ॥

यथा वा —

परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी ॥

अत्र शृङ्गारकरुणशब्दौ विभावोत्कर्षार्थावेव, न स्वार्थप्रतिपत्त्यर्थौ । स्वार्थस्य [2]विभावाभ्यामेव प्रतिपन्नत्वात् । अत एव गुणत्वम् ।

ननु लोके सिद्ध एव घटादिरभिव्यज्यते, नासिद्धः; रसोऽप्यभिव्यज्यते चेत्सिद्ध एव प्राप्तः । सिद्धत्वे च तन्निष्पत्तिश्रुतिविरोधः । न च व्यञ्जकैरेव निष्पत्तिरभिव्यक्तिश्च युगपत्कर्तुं शक्यते; तथा क्वचिददृष्टेः[3] । पूर्वं निष्पत्तिः, पश्चादभिव्यक्तिरित्येतदपि न साधु; विभावादिप्रतीतिसमनन्तरं अभिव्यक्तेरिष्टत्वात् ।

1. उत्फणै च, उत्फणाहि । (क, ख)
2. सविभावताभ्यामेव पा० (ख)
3. अदृष्टः । पा०

अत्रोच्यते — अलौकिकानामिदमेव लोकोत्तरत्वं, यदयं सिद्धोऽप्यभिव्यङ्ग्यः। न चायं कार्यः; कार्यत्वे तस्य विभावादिनाशेऽपि सद्भावः स्यात। नापि ज्ञाप्यः; तस्य सिद्धत्वाभावात्। केवलं चर्व्यमाणतैकप्राणो विभावादिभिरसौ रसोऽभिव्यज्यत एव। चर्वणानिष्पत्त्या [1]तस्य निष्पत्तिरुपचार एव। रसस्य कार्यत्वे ज्ञाप्यत्वे वा, विभावादयः कारका ज्ञापका भवेयुः। कार्यत्वे ज्ञाप्यत्वे च न तेषां कारकत्वं ज्ञापकत्वं वा। कारकज्ञापकव्यतिरिक्तवस्त्वन्तराभावेऽपि [2]तृतीयकोऽप्यभिव्यञ्जक विभावादिलक्षणपदार्थाभिव्यङ्ग्यत्वमपूर्वमपि रसस्यालौकिकत्वमेव साधयति। यथा— तस्यैवानन्दमयस्य संविद्रूपस्य सर्वप्रमाणाविषयस्यापि सविकल्पकनिर्विकल्पकप्रत्यक्ष-गोचरत्वं। न खलु तस्य निर्विकल्पकं ग्राहकं; विभावादिपरामर्शप्रधानत्वात्। [3]नापि सविकल्पकं; स्वसंवेदनासिद्धत्वात्। तथापि तदुभयग्राह्यत्वमस्य लोकोत्तरता-मेव गमयति।

येऽप्याहुः —

वाच्यप्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया।
वाक्यार्थः कारकैर्युक्ता स्थायीभावस्तथेतरैः॥

इति रसादेर्वाक्यार्थत्वम्। अस्यायमर्थः — यथा लौकिकवाक्येषु श्रूयमाणक्रियेषु "गामभ्याजे"त्यादिषु, अश्रूयमाणक्रियेषु च "द्वारं द्वार"मित्यादिषु स्वशब्दोपादाना-द्बुद्धिसंवेशिनी वा क्रियैव कारकोपहता वाक्यार्थः; तथा [4]काव्येष्वपि स्वशब्दोपादा-नात् "क्वचित्प्रीत्यै नवोढा प्रिया" इत्येवमादौ क्वचित् प्रकरणवशात्, विभाव-नियतानियतविभावाद्यविनाभावाद्वा साक्षाद्भावकचेतसि विपरिवर्तमानो रत्यादि-स्थाय्यात्मा स्वविभावानुभावव्यभिचारिभिस्तच्छब्दोपनीतैः संस्कारपरम्परया परां प्रौढिमुपनीयमानो वाक्यार्थ — इति।

तन्मते रसादेरलङ्कार्यत्वालङ्कारत्वप्रविभागो न स्यात्; प्रधानतया यत्र स्थितो रसादिस्तत्रालङ्कार्यत्वम्, प्रधाने तु वाक्यार्थे यत्राङ्गभूतो रसादिः, तत्र

1. च चौर एवायम्। पा० (क, ख)
2. तव कोऽप्यभि। पा० (क, ख)
3. तथाच। पा० (क, ख)
4. कार्येष्वपि। पा०

अलङ्कारत्वमित्यस्त्येव प्रविभागः । स च रसादेः वाक्यार्थत्वे प्राधान्याप्राधान्ययोः प्रतियोग्यन्तराभावात् किन्निबन्धनः स्यात् ।

वाच्य एव वाक्यार्थ इति अन्विताभिधानवादिनः । तन्मते रसादेरवाच्यत्वादेव वाक्यार्थत्वं निरस्तम् । सामान्यरूपाणां पदार्थानां आकाङ्क्षासन्निधियोग्यतावशात् परस्परसंसर्गे यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थः, तत्राभिहितान्वयवादेऽपि तस्माद्विशेषरूपादन्यत एव रसादिः प्रतीयते, तदन्यत्वं च सर्वलोकेभ्यो रसादिप्रतिपत्तेरभावात् काव्यवाक्येभ्योऽपि वाक्यार्थबोध एव भावाच्च ।

" सन्दर्भं प्रथमं पश्येत् पदानि तदनु स्पृशेत् ।
पदार्था न थ वाक्यार्थान् रसभावांस्ततस्ततः ॥ "

इति सन्दर्भाद्यानुपूर्व्या वाक्यार्थव्यतिरेकेणैव रसादेरनुसन्धानमिति कथमस्य वाक्यार्थत्वम् ? न ह्यलौकिको रसः कारणकार्यसहकारिभिः संसृज्यते ; किन्त्वभिव्यज्यत एवेति कथं कारणसंसृष्टक्रियासाधर्म्यं स्थायिभावस्य भवेत् ।

ननु कारणकार्यसहकारिणोऽपि नान्यस्य, किन्तु स्थायिन एवेति, तस्य तैस्सह सम्बन्धात्, कारणादिप्रतिपादककार्यस्थायी वाक्यार्थ इति चेन्न ; पदार्थाभिव्याप्तस्य[1] वस्तुनो वाक्यार्थत्वाभावात् । अन्यथा " बालो मृदं भक्षयती " त्यत्र मृद्भक्षणजन्या विकारा मृदुपादानपरमाणवो बालस्य पितरौ च व्याप्तत्वात वाक्यार्थतां व्रजेयुः । न च तेषां वाक्यार्थत्वम्, यतो विशिष्टा एव पदार्था वाक्यार्थाः । न तु वाक्यार्थप्रत्ययाधीनप्रतीतिमात्रमर्थान्तरं । तत्तु व्यङ्ग्यमेव ।

स्यान्मतम् — यत्परश्शब्दः, स शब्दार्थः । काव्यशब्दाश्च स्थायिप्रतिपादनैकपराः -- इति, पदार्थस्यापि स्थायिनो वाक्यार्थत्वमिति ।

नैतत्सारं, यस्मादुपात्तस्यैव शब्दस्यार्थे वाक्यस्य तात्पर्यम् ; न प्रतीतमात्रे ; अन्यथा, लक्ष्येऽप्यर्थे शब्दस्य तात्पर्यालक्षणा निष्फला स्यात् । " विषं भक्षय " " मा चास्य गृहे भुङ्क्थाः " इत्यत्राप्युपात्तस्यैव शब्दस्यार्थे वाक्यार्थस्य तात्पर्यम् । " विषभक्षणादपि दुष्टमेतद्गृहे भोजनम् ; सर्वथा मास्य गृहे भुङ्क्थाः " इति स एव

1. अभिव्यक्तस्य । पा०

वाक्यार्थः। नापि शब्दवाच्यत्वं स्थायिभावस्य पूर्वोक्तन्यायात्; येनोपात्तशब्दार्थतया काव्यशब्दानां तत्र तात्पर्यं स्यात्। नाप्यसावशब्दवाच्यत्वात् बुद्धिस्थतयापि वाक्यार्थः; यतो "विप्रियतां" (त्रि) "संविप्रियतां" इति शब्दवाच्यैव क्रिया; "द्वारं द्वार" मित्यादौ बुद्धिस्थतया वाक्यार्थत्वं भजते। न चासौ स्थायिभावः परमार्थतो भावकानां बुद्धिस्थः; किन्तु वासनात्मतया स्थितः। वाच्यतया बुद्धिस्थत्वे विभावादिवैयर्थ्यं; तस्य शब्देनैव संविदितत्वात्। विभावादीनां बुद्धिस्थाद्विना स्पष्टं व्यङ्ग्यत्वम्। अशब्दवाच्यस्य पदार्थान्तरैर्बुद्धिस्थस्य व्यङ्ग्यत्वव्यतिरेकेण प्रकारान्तराभावात्। काव्येषु रसादीनां व्यङ्ग्यव्यञ्जकत्वभावलक्षणसंबन्धः सिद्धः।

ननु — चित्तवृत्तिविशेषास्तु भावयन्ति रसान् यतः।
रसादयस्तथा भावशब्देनान्यैरुदीरिताः॥

इति रत्यादेः स्थायिभावस्य वासनाद्वारेण रसभावकत्वं श्रूयते। न [1]चाप्रतीतस्थायी रसभावकः। नान्यतस्तत्प्रतिपत्तिः। अपि तु विभावादिद्वारा[2] काव्यत एव। अतः, स्थायिप्रतिपादकस्य काव्यस्य रसभावकत्वं दृश्यत इति काव्येन रसादेर्भाव्यभावकलक्षणसम्बन्धो, न व्यङ्ग्यव्यञ्जकरूप इति चेत्; अहो! प्रज्ञाप्रकर्ष आयुष्मतः। तथा—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः॥ इति।

विभावादेर्भावकचित्तान्तर्निपरिवर्तमानत्तदात्व एव स्वाद्यस्य स्थायिन एव रसत्वमङ्गीकृत्य, तस्यैव रसभावकत्वमुद्भाव्यते। किमनेन स्थायिना अपराद्धम्? येनेमं परिहृत्य चैतद्वासनस्यैव रसत्वं प्रसाध्यते। रामादिसम्बन्धेन प्रतीयमानत्वमस्या अपराध इति चेत्, न; तद्वासनस्यापि तथात्वप्रसङ्गात्। अथ स्वाद्यत्वदशायां वेद्यान्तरसम्पर्कशून्यतया तस्यैव प्रतिभासो नान्यस्येति चेत् — एवं तर्हि प्रकृत एव वासनात्मकतया स्थितः स्थायी तथाभूतामवस्थामास्थितो रसोऽस्तु; किमन्तर्गडुना तद्वासनेन?

---

1. न च न प्रतीतस्थायिभावरसभाव। पा० (ग)
2 द्वारिका। पा० (क)

“ चित्तवृत्तिविशेषास्तु भावयन्ति रसान् यतः ” इत्यादेः का गतिरिति चेत्? लोक एव गतिः । यतो लौकिक एव स्थायिभावः प्रमदादिभिः कारणादिभिरनुभूयमानो रसिकानां चेतसि स्ववासनं निदधाति = वासनात्मतया तिष्ठतीत्यर्थः । अत्र भूधातुः — करणे, व्याप्तौ च । यदुक्तम् —

“ भूधातुः करणे व्याप्तौ वर्ततेऽत्र निरूपणे । ” इति

अत्र मुनिः —

“ वागङ्गसत्त्वोपेतान् काव्यार्थान् भावय ” तीति — भावः । भवति चात्र श्लोकः —

वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् [1]भाव उच्यत ॥ इति ।

भू इति, करणे धातुः । यथा —

भवितं, वासितं, कृतं — इत्यनर्थान्तरम् । भोगो ह्यनेन, रसेन गन्धेन वा सर्वमेतद्भावितम् । तत्र व्याप्त्यर्थे । भवति चात्र श्लोकः । —

विभावेनाहृतो योऽर्थस्त्वनुभावैश्च गम्यते ।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः ॥ इति ।

व्याप्त्यर्थे किं व्याप्नोति भाव इति चेत्; शरीरमिति ब्रूमः । उक्तं हि मुनिना—

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः ।
शरीरं व्याप्यते तेन [2]शुष्कं काष्ठमिवाग्निना ॥ इति ।

करणार्थस्तु — भावो लौकिकस्थायिभावलक्षणो रसिकानां चेतो भावयन्, वासयन्, स्ववासनाद्वारेण रसभावकतामापाद्यते । व्याप्त्यर्थस्तु — वासनात्मको हि विभावादिव्यङ्ग्यो रस एवेति, व्यङ्ग्यव्यञ्जकलक्षण एव रसकाव्ययोस्सम्बन्धः, न भाव्यभावक इति सिद्धम् ।

अत्र व्यङ्ग्यत्वे तुल्येऽपि, वस्त्वलङ्कारयोरिव रसादेः न संलक्षितक्रमव्यङ्ग्यत्वम् । अपि तु, असंलक्ष्यक्रमव्यङ्ग्यत्वमेव ।

---

1. भावना यथा । पा० ग.
2. शुष्कंकाष्ठमिवानलः । पा० (क, ख)

व्यङ्ग्योऽर्थस्त्रिविधः, वस्त्वलङ्काररसभेदात् । तत्र वस्त्वलङ्कारौ संलक्ष्यक्रमौ; रसस्तु असंलक्ष्यक्रम एव । तथाहि — त्रिविधं काव्यमुच्यते उत्तमादिभेदेन । यत्र प्राधान्याद्व्यङ्ग्योऽर्थो वाच्यमन्यद्भवति, तदुत्तमं काव्यम् । स एव ध्वनिः । उक्तं च काश्मीराधिपतिना —

इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः — इति ।

यथा —

निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

अत्र तदन्तिकमेव रन्तुं गतासीति, प्राधान्याद्ध्वन्यते ।

यत्र वाच्यस्य प्राधान्यात् व्यङ्ग्यस्य गुणभावः, तन्मध्यमं काव्यम्; तदेव गुणीभूतव्यङ्ग्यम् ।

उक्तं हि — अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्येतु मध्यमम् — इति ।

यथा —

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुस्सुतरां मलिना मुखच्छाया ॥

अत्र वञ्जुललतागृहे दत्तसङ्केता नागतेति व्यङ्ग्यं गुणीभूतम् ; तदपेक्षया वाच्यस्यैव चमत्कारकारित्वात् ।

अव्यङ्ग्यमधमम् — तच्च द्विधा — शब्दचित्रं, वाच्यचित्रमिति ।

यदुक्तम् —

' शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं [1]त्ववरं स्मृतम् " इति

शब्दचित्रं यथा —

कूजत्कोयष्टिजुष्टाव्रटनिकटरटद्भेकपाकानुपारी
व्यासर्पत्सर्पसङ्घे लुपदुरुशफरग्रासहृष्यद्बकोटम् ।

1. व्यङ्ग्यं च परं स्मृतम्, — व्यङ्ग्यमधमं स्मृतम् । पा० (ग)

ताटाकं कङ्कुलीरक्षनपुरुषटत् टिट्टिभोन्मग्नमद्गु-
ग्रीष्मोष्माशुष्कतालुः[1] पथि पथिकजनो जानुदघ्नं जगाहे ॥

वाच्यचित्रं यथा —

उदयति विततोर्ध्वरश्मिरज्जौ
अहिमकरे हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥

अत्र स्फुटो न कश्चिद्व्यङ्ग्योऽर्थः; केवलमनुप्रासोपमाभ्यां शब्दार्थयोर्वैचित्र्यम् ॥

ध्वनिश्च – अविवक्षितवाच्यो विवक्षितवाच्यश्चेति द्विविधः । अविवक्षितवाच्योऽपि अत्यन्ततिरस्कृतवाच्योऽर्थान्तरसङ्क्रमितवाच्यश्चेति द्विधा । यत्र च वाच्यं क्वचिदप्यनुपपद्यमानतयाऽत्यन्ततिरस्कृतं सोऽत्यन्ततिरस्कृतवाच्यो ध्वनिः । यथा —

उपकृतं बहु तत्र किमुच्यते सुजनता भवता प्रथिता परम् ।
विदधदीदृशमेव सदा सखे ! सुखितमास्व ततः शरदां शतम् ॥

एतदपकारिणं प्रति विपरीतलक्षणया वक्ति ।

यत्र वाच्यं क्वचिदप्यनुपयुज्यमानत्वात् अर्थान्तरे परिणमितम्, सोऽर्थान्तरसङ्क्रमितवाच्यः । यथा —

त्वमसि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥

वचनाद्युपदेशरूपतया परिणमति ।

विवक्षितवाच्योऽपि – असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विप्रकारः। रसादौ व्यङ्ग्ये तु असंलक्ष्यक्रमव्यङ्ग्यत्वं, यतो रसादेरेव व्यङ्ग्यस्य क्रमो न लक्ष्यते । न खलु विभावानुभावव्यभिचारिण एव रसः; अपि तु रसस्तैरित्यस्ति क्रमः । स न

1. गुच्छ । पा० (ग)

लक्ष्यत एवेति, असंलक्ष्यक्रमो व्यङ्ग्यो रसादिः । तद्युक्तो ध्वनिः, असंलक्ष्यक्रम व्यङ्ग्य इत्युच्यते ; अस्यैव रसध्वनिरिति प्रवादः ।

रसध्वनेरध्वनि ये चरन्ति सङ्क्रान्तवक्रोक्तिविकासमुद्राः ।
तेऽस्मत्प्रबन्धानवधारयन्तु कुर्वन्तु शेषाः शुकवाक्यपाठम् ॥

वस्त्वलङ्कारयोर्व्यङ्ग्यत्वे लक्ष्यत एव क्रमः ।

यतः शब्दार्थयोः क्रियासमभिहारेणावर्त्यमानयोः घण्टानुनादकल्पौ वस्त्वलङ्कारौ लक्ष्यमाणक्रमतया शब्दार्थाभ्यामभिव्यज्येते ; अतस्तद्युक्तो ध्वनिर्लक्ष्यक्रमव्यङ्ग्यः । वस्तुव्यङ्ग्यो यथा —

पंथि अण एत्थ सत्थरमत्थिमणं पत्थरत्थळे गामे ।
उण्णअ पयोहरं पेक्खि ऊण जइ वससि ता वससु ॥

अत्र यद्युपभोगक्षमोऽसि तदास्वेति व्यज्यते ।

अलङ्कारो व्यङ्ग्यः, अलक्ष्यक्रमव्यङ्ग्ये तु ध्वनौ रसादिलक्षणो व्यङ्ग्यो रसाद्यलङ्कारादन्योऽलङ्कार्य एव । उक्तं हि —

रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः ॥ इति ।

अत्र आदिग्रहणात् भावोदय-भावसन्धि-भावशबलत्वादिरसादयः पुरस्तादुदाहरिष्यन्ते ।

गुणीभूतव्यङ्ग्ये तु रसादिरलङ्कारः ।

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ॥
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥

एतदुक्तं भवति —

प्रधानतया यत्र स्थितो रसादिस्तत्र ध्वनौ रसादिरलङ्कार्य एव ; अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिः, तत्र गुणीभूतव्यङ्ग्ये रसवत् - प्रेय - ऊर्जस्वि- समाहितादयोऽलङ्कारा इति ।

यथा —

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥

अत्र वाच्यस्यैव प्राधान्यात् रसोऽलङ्कार एव ।

अलङ्कार्यत्वपक्षे रसं प्रति गुणीभूतयोः शब्दार्थयोः अतिशयापादनद्वारेण अनुप्रासोपमादयः रसादेरलङ्काराः ।

उपकुर्वन्ति तं सन्तो येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥

अङ्गद्वारेण — शब्दार्थमुखेनेत्यर्थः । अनुप्रासस्य रसोपकारकत्वं यथा —

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥

उपमा यथा —

मनोरोगस्तीव्रो विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥

एवमन्येऽपि रसालङ्कारा उदाहर्तव्याः ।

चिदानन्दमयो व्यङ्ग्यो लक्ष्यक्रमविनाकृतः ।
अलङ्कार्योऽप्यलङ्काररूपो रस इहोदितः ॥

इति रसविवेकनाम्नि काव्यादर्शे रसस्वरूप-
निर्णयो नाम प्रथमोल्लासः

---

श्रीः

# अथ द्वितीयोल्लासः

रसस्य विदिते तत्त्वेऽप्याधारो ज्ञायते न चेत् ।
दूरे तन्निश्चयो यस्मादतस्स प्रतिपाद्यते ॥

अत्र केचिदाहुः — मुख्यया वृत्त्या रामादावनुकार्ये रसः, ताद्रूप्यानुसन्धानात् नर्तकेऽपि प्रतीयत इति । तदयुक्तम् । प्रेक्ष्यं पश्यतां, श्राव्यं शृण्वतां भावकानां स्वात्मगततयैव तस्य सुसंवेदनसिद्धत्वात् । किंच, रामादिषु रसः पूर्वमासीत्; अद्यत्वे सभ्यानां किमायातम् ?

[1]अथोच्येत, — नटो हि रामादीननुकरोति; तथाभूते तस्मिन् रसः सोऽनुभूयते सभ्यैरिति; तन्न शोभनम् । धनार्थमेव प्रयतमानस्य नटस्य चेतसि न भाववासनाप्राप्तिः; रसस्य तु का वार्ता ।

यन्मतं — रसादेः स्थायिभावस्यानुकारो रस इति तदप्यसारं, कटाक्षादिभिरेव भावमनुकर्तुं नट उत्सहते । अतद्रूपैस्तैः कथमिव भावोऽनुक्रियते ।

अथ चेष्टानुकारेण भावानुकार इति चेत; तन्न; भावस्याप्रतीतेः । न खलु धूमाकाराद्बाष्पात् अग्न्याकारः प्रतीयते । न चैतद्वाच्यं—धूमतया ज्ञायमानाद्बाष्पादग्न्याकारप्रतीतिवत्, रामचेष्टात्वेनावबुद्ध्यमानाद्रामचेष्टानुकारिनर्तकचेष्टादेर्दर्शनात् रामगतस्थायिभावप्रतीतिरिति; रामगतयोः चेष्टास्थायिभावयोः सम्बन्धग्रहणात् । सम्बन्धाग्रहे च तच्चेष्टानुकारात्तद्भावप्रतीतिर्दुर्लभैव । न खलु गृहीतधूमाग्निसम्बन्धस्य धूमाकाराद्बाष्पात् अग्निज्ञानमुदेति ।

न सोऽस्ति लोके, यो रामं साक्षादुपलभ्य, तच्चेष्टास्थायिभावयोर्व्याप्तिग्रहण [2][ पूर्वं तच्चेष्टानुकारात्तत्स्थायिभावमनुकारको गृह्णति । यस्येदृशी चेष्टा स एवंविध ] स्थायिभाववानिति सामान्यतो व्याप्तिमनुसंहितवतां सभ्यानां तथाविधचेष्टा-

1. अतोऽन्यथोच्येत । (क)
2. कुण्डलितो भागः 'क' पुस्तके नास्ति ।

प्रकटनपटीयसि नटे रामचेष्टानुकृतेर्दर्शनात्, तद्योग्यस्थायिभावप्रतीतिरिति चेन्न; अस्तु नाम प्रतीतिः; रसस्तु [1]नर्तके परमार्थतोऽसन्नेव। असतः कथं चर्वणीयत्वं? चर्व्यमाणतैकप्राणो हि रसः। रसिकानां, न खलु रामे रसः पूर्वमासीदिति प्रतिपत्तिमात्रेण रसिकानां रसिकत्वम्। किन्तर्हि? रसानुभावः। यदि च मुख्यया वृत्त्या रामादौ स्थितो रसः ताद्रूप्यानुसन्धानात् नटे प्रतीयत इतीष्यते; तदा तद्दर्शनानन्तरं रसवानयमिति प्रतीतिमात्रं लौकिकनायकदर्शनवत् प्रेक्षकाणां भवेत्, न रसास्वादः।

ततश्च, शृङ्गारिणि तस्मिन् साधूनां शृङ्गारवानयमिति प्रतीतिमात्रम्; दुर्जनानां पुनरीर्ष्यारागद्वेषप्रसङ्गाभ्यधिको दुर्निवारः स्यात्। यदुक्तम् —

"द्रष्टुः प्रतीतिर्व्रीडेर्ष्यारागद्वेषप्रसङ्गतः।
लौकिकस्य स्वरमणीसंयुक्तस्येव दर्शना" दिति॥

स्यान्मतम् — "ममैवैते, शत्रोरेवैते, तटस्थस्यैवैते, न ममैवैते, न शत्रोरेवैते, न तटस्थस्यैवैते" — इति सम्बन्धविशेषस्वीकारपरिहारनियमात्, नाध्यवसायात्, विभावानुभावव्यभिचारिणः साधारण्येन प्रतीयन्ते। तैश्च सर्वसाधारणैः नटेनैव प्रकाशितैः, तस्यैव नटस्य सहृदयस्य वासनात्मतया स्थितः [2]स्थायिभावः स्वाद्यतामानीयमानो रसत्वेनावतिष्ठते; स रस्यते सामाजिकैरिति, किमनेन मुखताम्बूलन्यायेन परिचर्वितचर्वणात्मकेन तथाभूतैर्विभावादिभिरुपायैः साधारणैः सामाजिकानामेव तथाविधो भावो निर्भरानन्दसंविद्रूपतामधिगच्छन्, रसावस्थामवगाहताम्, यतः तत्कालविगलितवेद्यान्तरसंपर्कशून्यतया[3] तन्मयतां द(ध)त्ते। अयमेव समरसीभावः। अयं नटस्य, सामाजिकानां च हृदयेषु भावोत्कर्षस्यैकघनरूपेण संवादः। अयमेव लयः। व्यञ्जक (चित्त) [4]वृत्तिचित् — संविदानन्दानां पूर्वस्य पूर्वस्योत्तरस्मिन् प्रलीनतया यदानन्दस्यावशेषः, ततश्च व्यञ्जकानां भावानां वृत्तिमात्रत्वं, वृत्तेरन्तःकरणमात्रत्वं, अन्तःकरणस्य संविन्मात्रत्वं, [5]संविदोऽप्यानन्दमात्रत्वं

---

1. इदं पदं नास्ति। (क) पुस्तके।
2. ग्रहणस्थायि। पा० (क)
3. इदं पदं नास्ति (क) पुस्तके।
4. वृत्तिचित् — स्थाने, चित्तेति 'क' पुस्तकेऽस्ति।
5. एतत्पदं कुत्रचिन्नास्ति। (क)

लय इत्युक्तं भवति । आनन्दस्य [1]तु ब्रह्मत्वेन, लयवत्तामधिष्ठानत्वमेव न तु लयः ।

एष प्रकारो योगशास्त्रेषु "उल्लङ्घन क्रम" इत्युपदिश्यते । उक्तं हि —

भावा वृत्तिषु ताश्चित्ते चित्तं संविदि चापरे ।
धामन्यस्तं यत्र याताः क्रम उल्लङ्घनात्मकः ॥" इति ।

लयो यथा —

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयाः
तास्ता [2]मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यविषयव्यापाररोधी क्षणात्
आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ इति ।

"भावनाविभवेनैव लभ्यते स्थितिरात्मनः" इत्युक्तेरप्यत्रापि आत्मनो मनस्यानन्दप्राप्तिरपि व्यञ्जकानां भावनयैवेति वेदितव्यम् । यत्र श्रुतोऽप्यर्थो यावद्भावितः, तावद्भाव एव नोद्भवति । रसस्य तु का वार्ता? भावनायाः कोऽप्येष महिमा, येन व्यञ्जकादिचतुष्टयमानन्दे विलीयते, स्वयं च । अन्यथा, आनन्दैकरसत्वविरोधः । भावनां विलयावसरे चाहंकारविरहादानन्दाकार[3]मनोवृत्तिप्रवाहतया च संप्रज्ञातसमाधाविव रसिकानामवस्था ।

संप्रज्ञातसमाधिश्च यथोच्यते —

ब्रह्माकाररसे वृत्तिप्रवाहेऽहंकृतिं विना ।
संप्रज्ञातसमाधिस्सा ध्यानाभ्यासप्रकर्षतः ॥ इति ।

असंप्रज्ञातसमाधौ तु वृत्तिशून्यं सहजानन्दचित्तमेव परिस्फुरति । उक्तं हि —

प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् ।
असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥ इति ।

अहन्ताविरहात् तदौपम्यं नाकलनीयम् । रसिकदशायां यतो वृत्तिरेव निराकारो, भावनानां भावोत्कर्ष एव रस इत्युक्तम् ।

---

1. अयं नास्ति (क) पुस्तके ।
2. तन्मुग्धदृशो । (क) पा०
3. रः वृत्तिप्रवाह । पा० क)

ननु यद्यात्मस्थ एव भावो वासनात्मको भावो विभावादिप्रसादसंप्राप्तसात्मस्थः सामाजिकैरनुभूयते, तस्मिन्नत्र नटेन कार्यमिति चेत्; अहो! पूर्वोत्तरानुसन्धान-कौशलं भवतः। यत्नाट्यस्य निरूपणे प्रस्तुते किमत्र नटेनेति पर्यनुयोगः क्रियते। नाट्यं नाम — अवस्थानुकृतिः। अनुकार्यो रामादिः। अनुकर्ता नटः। तेन च रसो निर्वर्तनीयः। स च सामाजिकानामिति मुनिर्व्यूढोऽयमर्थः।

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः॥

इत्युक्तेर्भावस्यैव रसभावः प्रतीयते। भावश्च द्विप्रकारः। अनुकार्याश्रयो, भावकाश्रयश्चेति। अनुकार्याश्रयो नाम सविकारात्मकः; बाह्यार्थालम्बन इत्यादेर्भावलक्षणस्य तत्रैव मुख्यार्थत्वात्। अनुकार्येण स्वयं भावस्य परामर्शे विकारात्मकत्वप्रतीतिश्च।

तथाहि —

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते॥

यथावा — विनिश्चेतुं शक्यो न सुखमिति नो दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मूढयति च॥

स च भावस्तस्यैव रसयितुं योग्यः; नान्यस्य; ([1]यतः स्वसंवेद्यत्वमपि रसस्य स्वरूपमिष्टम्, यदन्याश्रयो अन्यैर्गोचरीक्रियते, तदनुमानेन; अर्थापत्त्यावेति बोद्धव्यम्। नटस्य रामानुकृतिवेलायां, सामाजिकैरपि लोकोत्तरो रसोऽनुभूयत एव। न च तेनानुकार्यस्य रसेन रसवत्तः अन्यस्य रसः) तेनान्यस्य रसिकत्वायोगात्, स्वसंवेदन-विरोधाच्च। "न भावशून्योऽस्ति रस" इति स्मरणात्, सामाजिकेष्वपि भावसंभवो दर्शनीयः। न च मानसविकारात्मको भावस्तेष्वपीति युक्तं, तस्य विद्यमानबाह्यार्थ-

1 कुण्डलितो ग्रन्थः 'क' पुस्तके नास्ति।

विषयत्वेन नियतत्वात् । रामादिष्वसत्स्वेव सामाजिकेषु भावः । तेन भावस्य रूपान्तरं वाच्यं, तच्च विकारत्वेऽपि वासनात्मकत्वमेव । यदुक्तं "भावस्तद्भावभावन" मिति । तद्भावस्य भावकचेतसो भावनं – वासनं भावनमित्यर्थः । तस्य वासनात्मकस्य सामाजिकानां भावस्य व्यक्तस्यैव रसत्वं, तद्व्यक्तिश्च विभावादेः । विभावाद्यप्रतीतौ नोत्पद्यत इति विभावादीनां प्रत्येतव्यत्वं । प्रत्यायकत्वं अभिनयकाव्ययोरित्यभिनेतुमनिगदतो नटस्य सामाजिकरसनिष्पत्तावुपधायकत्वमयत्नसिद्धमेवेति, न तस्याकिञ्चित्करत्वं स्वप्नेऽप्याशङ्कनीयम् ।

ननु रामादिष्वसत्स्वेव तद्विभावनाद्रसो यदि सामाजिकेषु स्यात्, तदा निरालम्बनवादो दत्तावलम्बः स्यात् । न तेषामनपेक्षितं (सत्त्वम्); [1]बाह्यार्थसत्त्वानां शब्दोपहितरूपतया अध्यासितसत्त्वानां सत्त्वाद्भावकचेतसि विपरिवर्तमानानां आलम्बनत्वदिसिद्धेः । कार्यैकसमधिगम्या हि वस्तुसत्ताव्यवस्था । यथा विधौ सत्यङ्गीक्रियमाणे समीहितसिद्धिः, तथाविधमेव सत्त्वमाश्रयणीयम्; शब्दोपादानादेवाहितसत्त्वे वस्तुनि रसोदयदर्शनात् । शब्दाहितसत्त्वमेव विभावादीनामेषितव्यम् । यदुक्तम् —
( वाक्यपदीये )

शब्दोपहितरूपां स्तान् बुद्धेर्विषयतां गतान् ।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते ॥ इति ।

अतएवास्य लौकिकरसादन्यत्वमिति; यदयमनपेक्षितबाह्यसत्त्वैरेव विभावादिभिर्निष्पाद्यते ।

यद्यपि नाट्ये चित्राश्वन्यायेन रामोऽयमिति प्रतिपत्त्या नटे गृह्यमाण एव रसो जायते । तथाहि—यत्सत्त्वस्यापरमार्थत्वात् तस्य लौकिकरसत्वं न संभावनीयम् । तत्रापि शब्दोपहितसत्त्वे[2] न्याय्य एव नटाहितसत्त्वस्यापि रामादेरित्यभिप्रायः । क्वचिच्छब्दसन्दर्शितैः, क्वचिदभिधेयतयोपदर्शितैः विभावादिपदस्थैः रामादिभिः श्रोतृप्रेक्षकाणां रसो निर्वर्त्यत इति, न तेषां श्राव्यत्वे, दृश्यत्वे वा रसे किञ्चिदपि वैषम्यम् ।

---

1. बाह्यत्र । पा॰ (क) बाह्यसत्वानां । (ग)
2. ( सत्वस्य अतएव ? ) पा॰ (क)

ननु [1]कथं पुनः [2]सीतादीनां विभावत्वेऽप्यविरोधः। अत्रोच्यते— न खलु कवयो योगिन इव त्रैकाल्यावच्छिन्नान्नायकादीन् निष्प्रतीयेरन् ज्ञानचक्षुषा साक्षात् प्रतीत्य तेषां प्रातिस्विकं रूपं स्वकाव्ययादिप्रतीतिषु प्रतिछन्दयन्ति; अपि तु, औचित्यात् रसोपनिषदा [3][समर्पितां तामवस्थां स्वसन्दर्भैरविर्भावयन्ति, ततश्च निराश्रयमेवोपनिषदा] सम्भाव्यमानां भगवतीं लोकयात्रां पुरस्कृत्य तदनुरोधेन सर्वसाधारणीं स्वोत्प्रेक्षापरिष्कृतां तां तां अवस्थां [4]श्रव्यदृश्यमार्गेण निर्दिश्य, तां च नटेषु, उत्थापयन्ति।

ततश्च, स्त्रीपुंलक्षणं विभावितविशेषं विभाव (न) त्वं सामान्यात्मनैव रसनिष्पत्तिदशायामुपलब्धियोग्यं भवति। तदुक्तम् — "एभ्यश्च सामान्यगुणयोगेन [5]रसा निष्पद्यन्ते" इति।

तस्मात्, स्त्रीमात्रानुवादिनः परित्यक्तजानकीत्वादिविशेषाः सीतादिशब्दाः कस्य नाम विरुद्धां[6] धियमुत्पादयेयुः? अतश्च तदुपादानं नानर्थकं, सदाश्रयत्वेन ख्यात्यर्थत्वात्। असदाश्रयं काव्यमग्राह्यं यतः। यदुक्तं — "इतिहासकथोद्भूतमितरद्वा सदाश्रयम्।" इति।

यद्वा — क्रीडतां मृन्मयैर्यद्वत् बालानां द्विरदादिभिः।
सोत्साहः स्वदते तद्वत् श्रोतॄणामर्जुनादिभिः॥

इत्युक्तेः मृण्मयद्विरदादिन्यायः सीताद्युपादाने द्रष्टव्यः।

इदमत्राकूतम् :— लौकिकशृङ्गारादिवत्, नात्र स्त्र्यादिविभावानामुपयोगः; तथाविधोपयोगाभावात्।

तथाहि —

प्रसरति परिमाथी कोऽप्ययं देहदाहः तिरयति करणानां ग्राहकत्वं प्रमोहः।
रणरणकविवृद्धिर्बिभ्रदावर्तमानं ज्वलति हृदयमन्तस्तन्मयत्वं च धत्ते॥

---

1. इदं नास्ति। (क) पुस्तके।
2. (स्मितादीनां श्रुतादीनां?) पा॰ (क)
3. कुण्डलितो भागः 'क' पुस्तके नास्ति।
4. अस्य सदस्यै ...... वयाति। तां च .... मेवोत्थापयन्ति – इति त्रुटितग्रन्थभागः (क) पुस्तके दृश्यते।
5. रसो निष्पद्यत इति। (क) पा॰
6. विरुद्धां भयप्रतीतिं, (विरुद्धं भयं)। पा॰ (क)

इत्यादि तद्योग्यकार्याभावात् तदभावश्च भावकानां संवेद्यः । तस्मात्, काव्यनाट्ययोः स्त्र्यादिविभावानामन्यथैवोपयोगः । यथादर्शनं हि कार्यं प्रति कारणव्यापारः परिकल्प्यते । दृश्यते च रामादावनुकार्ये सामाजिकानां लोकोत्तरस्वसंवेदनानन्दः । तस्मात्, तन्मात्रपर्यवसायित्वमेव [1]स्त्रीविभावस्यापि । तद्वदेव द्विजमुनिनृपपुलजनन्यादिष्वपि विभावेषु तुल्यमिति नानिष्टापत्तिः । अथवा, व्यक्तिवादिनो मते विभावादीनां व्यञ्जकत्वप्रतिज्ञानात् सीतादीनां वासनात्मकस्यैव विभावस्य व्यञ्जकतया सिद्धौ दवीयस्येव विरोधाशङ्का ।

तस्मात्, यथोक्तन्यायेन (द) मलितनिखिलविरोधकलङ्को लोकानां लोकोत्तरो रसः सामाजिकानामिति सिद्धम् — तेषामेवाधिकरणत्वम् ।

किञ्च शब्दार्थयोः गुणभावेन रसाङ्गभूतस्यापि रसप्रवणतया विलक्षणं लोकोत्तरवर्णनानिपुणकविकर्म काव्यं, कस्य रसवत्तामापादयितुं कविभिः प्रवर्त्यत इति चिन्त्यम् । न तावदनुकार्यस्य, तस्य वृत्तत्वात् । नापि नटस्य, तस्य धनार्थित्वेन भावशून्यत्वात् । यदुक्तम् — " धनमाकाङ्क्षतस्तस्य भावशून्यं मनो ध्रुवम् " इति ।

ततः परिशेषात् सहृदयानामेव । यदुक्तम् —

रसः स एष स्वाद्यत्वाद्रसिकस्यैव वर्तनात् ।
नानुकार्यस्य वृत्तत्वात् काव्यस्यैतत्परत्वतः ॥ इति ।

यदि नटोऽपि सहृदयः स्यात्, तदा तस्यापि भावकस्य गानास्वादवत् काव्यरसास्वादो युज्यत एव । यदुक्तं—' काव्यार्थभावनास्वादो नटस्यापि न वार्यते । " इति ततश्च सहृदया एव रसिका इति, तेषामेव रसाधिकरणत्वं युक्तमित्यलं विस्तरेण

आशिवादधिपिपीलिकावधि व्याप्य विश्वमिदमास्थितस्य यत् ।
[2]आधृतेरिह रसस्य चिन्तनं तत्पुनस्तदतिलोकगं[3] परम् ॥

इति रसविवेकनाम्नि काव्यादर्शे रसाधारनिरूपणं नाम द्वितीयोल्लासः

---

1. स्त्रीणाम् । विभावस्यापि । पा० (क)
2. आवृते – पा० (क)
3. लोकता परः । पा० (क)

श्रीः

# अथ तृतीयोल्लासः

केचिदष्टौ रसानाहुरन्ये नव दशापरे ।
तेन संशयलोलानां प्रीतये किञ्चिदुच्यते ॥

इह खलु मूलरसाः चत्वारः ; तेभ्यः प्रत्येकमेकैकस्य रसस्योत्पत्तिरिति, अष्टावेव रसा इति केचित् । तथाहि — विभावादिभिः स्वादतां नीयमानो भावः स्थायी रस इति प्रत्यज्ञायि । स च स्वादः आनन्दलक्षणो वस्तुत एकोऽपि उपाधिभेदादनेकधा भिद्यते । उपाधिरपि चित्तभूमिकाः । ताश्च प्राधान्याच्चतस्रः—विकासो, विस्तरः, क्षोभो, विक्षेपः - इति । तत्र विकासोपाधिकः स्वादः शृङ्गारः, विस्तरोपाधिको वीरः । क्षोभोपाधिको बीभत्सः । विक्षेपोपाधिको रौद्रः । हास्याद्भुतभयानककरुणेष्वपि विकासादिरेवोपाधिरिति हास्यादीनां चतुर्णां शृङ्गारादिजन्यत्वम् । यदुक्तम् —

स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः ।
विकासविस्तरक्षोभविक्षेपैस्स चतुर्विधः ॥

शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात् ।

हास्याद्भुतभयोत्कर्षकरुणानां त एव हि ।
अतस्तज्जन्यता तेषामत एवावधारणम् ॥ इति ।

अत्र मुनिः — "तेषामुत्पत्तिहेतवश्चत्वारो रसाः । तद्यथा — शृङ्गारः, वीरः, रौद्रः, बीभत्सः" इति ।

अत्र श्लोकः — शृङ्गाराद्धि भवेद्धास्यो, रौद्राच्च करुणो रसः ।
वीराच्चैवाद्भुतोत्पत्तिः, बीभत्सात्तु भयानकः ॥ इति ।

अत्र विकासादिचित्तसंभेदाभेदेन हेतुहेतुमद्भाव एव रसानां विवक्षितः ; न तु कार्यकारणभावः । तेषां प्रत्येकं विभावादिकारणभेदस्य दृष्टत्वात् ।

शृङ्गारानुकृतिर्यातु स हास्य इति संज्ञितः ।
रौद्रस्य चैव यत्कर्म स ज्ञेयः करुणो रसः ॥

बीभत्सदर्शनाद्यच्च भवेत्स तु भयानकः ।
वीरस्य चापि यत्कर्म सोऽद्भुतः परिकीर्तितः ॥ इति ।

तेषां सविकासादिसंभेदैक्यमेव स्फुटं विभाव्यते । शृङ्गारहास्ययोर्विकासः; वीराद्भुतयोः विस्तरः; बीभत्सभयानकयोः क्षोभः; रौद्रकरुणयोः विक्षेपः - इति । तेषां द्वयोर्द्वयोः संभेदैक्येऽपि नास्त्येव साङ्कर्यम् । प्रतिरसं नियतविभावादिनैव विकासादिरूपविशेषस्यापि सिद्धेः । शृङ्गारविभावादेः अन्य एव हास्यविभावादिः । अतस्तज्जन्येऽपि विकासरूपेऽप्युपायौ कोऽपि विशेषः काव्ये कल्प्यो, येन भेदस्सिद्ध्येत् ।

यद्यपि यादृशाद्विकासात् शृङ्गारादयो, न तादृशात् ततो हास्यादयः; तथाप्युभयत्रानिर्धारितविशेषस्य विकासमात्रस्यानुवृत्तेस्तयोर्हेतुहेतुमद्भावोऽपि सिद्धः । तत्र हेतुत्वं तत्प्रयोजकत्वमेव ।

एतदुक्तं भवति : — धाराधिरूढे इव शृङ्गारे, प्रत्यासीदति च हास्ये, तदुन्मेषहेतोर्विकासात्मिकायाश्चित्तभूमेः समुद्भावनप्रवीणकारणकलापव्यापारस्य स्वकार्यनिर्वहणसिद्धेः पूर्वोत्तरायास्तथाविधाया एव भूमिकायाः शृङ्गारानुगुणायाः हास्यं प्रत्यनुकूलत्वाच्च, समानाकारयोः परस्परोपात्तकार्यकारणभावरूढमाहात्म्ययोः अन्योन्यसङ्कलनसातत्यप्रत्यस्तमितभेदवादयोः तुल्याधिकरयोः समरसीभूतयोः चित्तभूमिकयोः एकात्मतायाः प्रतीतेः शृङ्गारबीजस्य हास्यं प्रति निमित्तत्वप्रतीतिसिद्धौ, सिद्धैवेयं वाचोयुक्तिः — "शृङ्गाराद्धि भवेद्धास्यः" इति ।

इयमेव प्रक्रिया वीराद्भुतादिद्वयेष्वपि द्रष्टव्या । एतच्च विकासादिसंभेदचतुष्टयस्यैव रसभेदोपाधिकत्वेन सङ्ग्रहात्, अष्टावेव स्थायिनो भावा इति अवधारणाच्च, अष्टावेव रसा युक्ता इत्येके ।

के ते रसभावाः ? । उक्तं हि —

शृङ्गारहास्यकरुणवीररौद्रभयानकाः ।
बीभत्साद्भुतसंज्ञाश्चेत्यष्टौ नाट्यरसाः स्मृताः ॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥

शान्तोऽपि नवमोऽस्ति रसः इत्यन्ये । इह तु शान्तरसं प्रति बहुविधा विप्रतिपत्तयः ।

केचिदाहुः । नास्त्येव शान्तो रसः, तस्य चाचार्येण विभावाद्यप्रतिपादनात्, अलक्षणकरणाच्चेति ।

[1]एके तु वस्तुतस्तस्याभावं वर्णयन्ति; अनादिकालप्रवाहायातरागद्वेषादेः अत्यन्तमुच्छेत्तुमशक्यत्वादिति । अन्ये तु वीरबीभत्सयोरन्तर्भावं वर्णयन्तः शममपि नेच्छन्ति । अपरे तु यथातथाऽस्तु नाटकादावभिनयात्मनि स्थायित्वमस्माभिर्निषिद्ध्यते, तस्य समस्तव्यापारप्रशमनरूपस्याभिनयायोगादिति ।

वयं तु तत्त्वज्ञानजनितस्य निर्वेदस्य स्थायितां अभ्युपगच्छन्तो निर्वेदस्थायिभावं शान्तरसं ब्रूमः । उक्तं हि काश्मीराधिपतिना — "निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं, व्यभिचारिणोऽपि स्थायित्वस्थापनार्थम्; तेन निर्वेदस्थायिभावः शान्तोऽपि नवमोऽस्ति रसः" इति ।

तत्त्वज्ञानादपि निर्वेदो जायते । यथाह मुनिः -- निर्वेदो नाम, दारिद्र्यव्याध्याध्यवमानाधिक्षेपाक्रुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञानादिभिर्विभावैरुत्पद्यत इति ।

उक्तं चान्यत्र —

"तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदस्यावमाननम् ।" इति ।

तत्त्वज्ञानान्निर्वेदो यथा —

प्राप्ताः श्रियः सकलकामदुघास्ततः किं ?
न्यस्तं पदं शिरसि विद्विषतां ततः किम् ?
संप्रीणिताः प्रणयिनो विभवैस्ततः किं ?
कल्पस्थितैस्तनुभृतां तनुभिस्ततः किम् ॥

तत्त्वज्ञानवतां केनापि हेतुना निर्वेदस्य स्थायित्वात् तेषामेव शान्तरसोदयो, न सर्वेषां; "षड्रसाः किल वैद्येषु; भरतेऽष्टौ, नवाथवा" इति प्रसिद्धिः । "नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति" इत्याप्तवचनात् निखिलं जगत्तृणवदवलोकयतां सतां विशेषतोऽभिलषणीयत्वात् नवमो रसो नामत्वमर्हति ।

1. परेतु । पा० (क)

ननु स्वाद्यो हि रस इत्युच्यते। शान्तोऽपि स्वाद्यश्चेत्, तस्य विकासादिषु कस्सम्भेदः इति चेत्; अत्रोच्यते—अनादिकालप्रवृत्तरागद्वेषादिदूषितस्य भावकचेतसः तदधिवासासंभवात् तद्भावनालक्षणभावानुवृत्तौ तत्तद्विभावाद्यैरपि तस्य शान्तस्यानुदय एव; तथापि, तदात्मकानां तदुपायभूतानां काव्यगोचराणां एकत्र करुणामुदितोपेक्षाणामास्वाद्यत्वमस्त्येवेति, ततः स्वाद एव तत्प्रतिबन्धस्य आस्वादः। तथाच सति शान्तरसस्वादं प्रति विकासादयश्चत्वारोऽपि यथासंभवं संभेदा उपपद्यन्त इति, न पृथक्संभेदापेक्षा। यदुक्तम् —

"शमप्रकर्षो निर्वाच्यो मुदितादेस्तदात्मता।"

इति यदुक्तम्, अत एवावधारणमष्टावेवेति, तन्नाट्यरसत्वाभावापेक्षयेति बोद्धव्यम्। यदुक्तम् — "अष्टौ नाट्यरसाः स्मृताः" इति। शान्तस्य सर्वव्यापारोपरमरूपस्यानभिनेयतया नाट्यरसत्वाभावेऽपि काव्यरसत्वमस्त्येव। उक्तं हि — "काव्ये नव रसाः स्मृताः" इति।

ननु शान्तरसस्य नाट्यरसत्वाभावकथनमयुक्तमुत्पश्यामः; यतो नागानन्दे जीमूतवाहनस्य, "पित्रोः विधातुः शुश्रूषां" इत्यादिना शान्तरसोऽनुवर्णितः। तत्रापि, मलयवतीपाणिग्रहणप्रयुक्तस्य शृङ्गारस्य प्रकृतशान्तस्य च नैरन्तर्यविरोधनिरासाय "अहो गीतमहो वादित्र" मिति मध्येऽद्भुतरसोऽप्यधिकृतः।

अत्रोच्यते — न वयं शान्तस्य नाटकादावनुप्रवेशो नास्तीति ब्रूमः। अपि तु, तस्याभिनेयत्वायोगात् नाट्ये परिपोषो नास्तीति। यदुक्तम् —

"शममपि केचित्प्राहुः पुष्टिर्नाट्येषु नैतस्य"॥ इति।

एतच्च जीमुतवाहनस्य शान्तरसाश्रयत्वमङ्गीकृत्योक्तम्। न च जीमूतवाहनः शान्तरसाश्रयोऽपि धीरशान्तः; किन्तु धीरोदात्तः। औदात्त्यं नाम — सर्वोत्कर्षेण वृत्तिः। तच्च जीमुतवाहने पुष्कलमेव। न चैतद्वाच्यम्—निर्जिगीषुतयैव प्रतिपादिते तस्मिन्, कुतस्सर्वोत्कर्षेण वृत्तिरिति। न खल्वेकरूपैव जिगीषुता। [1]यस्तु वपुषस्त्यागेन कारुण्येन गुणान्तरेण वा अन्यानतिशेते; सोऽपि विजिगीषुरेवास्तु। ततः शान्तरसाश्रये तस्मिन्, अद्भुतान्तरितस्यापि शृङ्गारस्योपवर्णनमत्यन्तानुचितमेवेति, असौ

1. यस्य पुनस्त्यागे कारुण्येन। पा०

धीरोदात्त एवेष्टः ।

अपरे त्वाहुः — पित्रोरपत्यविषयो यः प्रीतिप्रकर्षो, नासौ शृङ्गारः; अकान्तविषयत्वात् । नापि हास्यादिष्वन्यतमः ; तल्लक्षणरहितत्वात् । न चायमनास्वाद्यः । तस्मान्नवभ्यो भिन्नो वत्सलाख्यो दशमो रसोऽवश्यमेषितव्यः । उक्तं हि —

" शृङ्गारवीरकरुणाद्भुतरौद्रहास्य-
बीभत्सवत्सलभयानकशान्तनाम्नः ।
आम्नासिषुर्दश रसान् सुधियः " ।। इति ।

यथा — हृदयान्नापयातोऽसि दिक्षु सर्वासु वर्तते ।
वत्स रामगतोऽसीति सन्तापेनानुमीयसे ।। इति ।

तदयुक्तं — दशमवदेकादशप्रभृतीन्यपि रसान्तराणि समर्थयितुं शक्यन्ते यतः ।

तथाहि — महेश्वरे या प्रीति, र्नासौ वत्सलो भवितुमर्हति; अपत्यविषयत्वाभावात् । नापि शृङ्गारादिष्वन्यतमः ; तद्विलक्षणत्वात् । तस्मादेभ्यो विभिन्नो [1]भक्तिर्नामैकादशोऽपि रसोऽङ्गीकर्तव्यः । एवं, मित्रविषयप्रीतिप्रकर्षरूपो द्वादशोऽपि सौहार्दनामा रसोऽङ्गीकर्तव्यः – इति, प्रतिविषयं रसा अनन्ताः प्रसज्येरन् ।

अथैषां प्रीत्युत्कर्षरूपतया वत्सलेऽन्तर्भावात् दशैव रसा इति चेत्; एवं तर्हि " प्रमोदात्मा रतिः " इति वचनात् रतिप्रीत्योरेकार्थतया वत्सलस्यापि शृङ्गारेऽन्तर्भावात् नवैव रसा इति किं नेष्यते? अपत्यादिविषयायां रतौ शृङ्गारव्यवहारो नास्तीति चेत्; मा भूद्व्यवहारः; तथाप्यसौ न शृङ्गाराद्व्यतिरिच्यते । न खल्वग्निरिति व्यवहारो नास्तीति, सुवर्णं भूतान्तरं भवितुमर्हति; अपि त्वग्निरेव । अयं तु विशेषः — कान्ताविषये रत्युत्कर्षः शृङ्गार इत्युच्यते, अपत्यविषयस्तु वत्सल इति ; उभयत्रापि स्थायिन एकत्वमेवेति, नवैव रसा इति स्थितम् ।

अन्ये तु — देवद्विजमुनिनृपपुत्रादिविषयां रतिमुत्कृष्टामपि ' भाव ' इत्येव व्यवहरन्ति । यथाहुः —

" रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भावः प्रोक्तः " इति ।

---

1. भक्तिरूप । पा० (क)

देवविषया रतिर्यथा —

अद्य या मम गोविन्द ! जाता त्वयि गृहागते ।
कालेनैषा भवेत्प्रीतिः तवैवागमनात्पुनः ॥

द्विजविषया रतिर्यथा —

गृहाणि [1]नाम तान्येव तपोराशिर्भवादृशः ।
सम्भावयति यान्येवं पावनैः पादपांसुभिः ॥

मुनिविषया रतिर्यथा —

भवत्सम्भावनोत्थाय परितोषाय मूर्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥

नृपविषया यथा —

धर्मस्त्वं मनसि त्वदर्थिभवनेष्वर्थस्त्वमेवासि भोः
कामस्त्वं करवाललूनशिरसां मोक्षो ध्रुवं वैरिणाम् ।
इत्थं सूरकुमार ! तावकवशो वर्गोऽपि धर्मादिकः
किं दुष्प्रापमपेक्षसे किमपरं कीर्तिस्तवैकप्रिया ॥

पुत्रविषया यथा —

ऊनषोडशवर्षो मे रामो राजीवलोचनः ।
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥

एवमन्येऽप्युदाहार्याः ।

अत्र [2]स्थायिनो निर्वेदस्यैव रसत्वोपदेशात्, अन्येषां व्यभिचारिणां स्थायित्वाभावादेव रसत्वं निरस्तम् । व्यभिचारिणोऽपि निर्वेदस्य [3]स्थायित्वादेव व्यभिचारिणः कल्प्यन्त इति, न तदभावाद्रसत्वाभावः । अत्र मुनिः —

यथाहि नरेन्द्रो बहुजनपरिवारोऽपि स एव नाम लभते, नान्यः सुमहानपि पुरुषः; तथा, विभावानुभावव्यभिचारिपरिवृतस्थायिभावो रसत्वं लभते — इति ।

1. वो वनान्येव । पा० (क)
2. अस्थायिनो । पा० (क)
3. अस्थायित्वादेव । पा० (क)

अत्र श्लोकः— यथा नराणां नृपतिः, शिष्याणां च यथा गुरुः।
एवं हि सर्वभावानां भावः स्थायी महानिह॥

अपि चोक्तम्— विभावैरनुभावैश्च युक्तोऽथ व्यभिचारिभिः।
आस्वाद्यत्वात्प्रधानत्वात् स्थाय्येव तु रसो भवेत्॥

स्थायिलक्षणं चैतत् —

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः॥ इति।

एतदुक्तं भवति — व्यभिचारिणो भावस्य, रसनाद्रस इति रसत्वे सिद्धेऽपि, अस्थायिभावपरिपोषस्य वैरस्यावहत्वात्, व्यक्तव्यापी भावः — इत्येव व्यवहारो, न त्वन्यो रस इति।

व्यक्तो व्यभिचारी यथा —

नाके कोपपराङ्मुखी प्रियतमा स्वप्नेऽप्यदृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः।
नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः॥

अत्र विधिं प्रत्यसूया।

इह तु य एव लोके स्थायिभावा नायकाश्रयत्वेन रसा इति प्रसिद्धाः; त एव वासनात्मकाः, लोकस्थित्यनुसारेण वर्णितैर्विभावादिभिः आस्वाद्यन्ते। लोके च तेषामुत्पत्तिरविरुद्धानामेव। विरोधोऽप्येकालम्बनविभावत्वम्। न ह्येकं वस्त्ववलम्ब्य एकस्यैव शृङ्गारबीभत्सयोः, वीरभयानकयोः, रौद्राद्भुतयोः, हास्यकरुणयोर्वा संभवः। तेन, एतेषां परस्परोत्पत्तिप्रतिबन्धकत्वाद्वारेण मिथो विरोधात् वैरित्वम्। यदुक्तम् —

शृङ्गारबीभत्सरसौ तथा वीरभयानकौ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः॥ इति।

एतदुपलक्षणमात्रम् — शान्तकरुणाभ्यां सह शृङ्गारस्य विरोधात्। भिन्नालम्बनत्वे तु

नास्ति विरोधः, एकस्यापि तदाश्रयत्वसम्भवात्। तथाहि—परदारेभ्यो बीभत्समानोऽप्युत्तमः, स्वदारेषु शृङ्गार्येव; वैरिषु वीरोऽपि परलोकाद्बिभेत्येव; शत्रुघ्नोऽपि दिव्यदर्शनाद्विस्मयत एव; तथा विकृतार्थस्सन्नपि दुःखिषु कारुणिक एव। तस्मात्, एकावलम्बनविभावत्वमेव रसानां विरोधः, न तु सहावस्थानम्; नापि बाध्यबाधकभावः।

एको रसोऽङ्गीकर्तव्यो वीरः, शृङ्गार एव वा।
अङ्गमन्ये रसास्सर्वे ॥

इति एकस्मिन् रसे रसान्तराणामङ्गतया सहावस्थानम्; कुतस्तरां बाध्यबाधकभावः?

अयमाशयः — तथोक्तेन प्रकारेण, रसानां स्वरूपतो विरोधस्य सहावस्थानरूपस्य बाध्यबाधकभावलक्षणस्य चासंभवात्, एकावलम्बनविभावत्वे सति सम्भवाच्च, विरोधहेतुः—एकावलम्बनविभावत्वमेव। प्रतिदर्शनार्थमेकावलम्बनविभावत्वमात्रमित्युपचर्यत इति, एकाश्रयत्वे सति एकावलम्बनविभावत्वं विरोध इति विशेषणमुपादेयम्।

परिव्राट् - कामुक - शुनामेकस्यां प्रमदातनौ।
कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥

इत्यत्र, प्रमदालक्षणैकावलम्बनविभावेऽपि परिव्राट्कामुकगतत्वेन भिन्नाश्रययोः बीभत्सशृङ्गारयोः नास्त्येव विरोधः। परिव्राट्कामुकयोः अन्यतराश्रयत्वेन एकाश्रययोर्विरोधः स्पष्ट एव। न ह्येकाश्रयत्वमात्रं विरोधः। मालतीमाधवे माधवस्य बीभत्सानुभवेऽपि शृङ्गारस्यानुकूलितत्वात्।

यदप्युच्यते — शान्तरसानन्तरं शृङ्गारस्यानुदयात्, अद्भुतव्यवधाने सत्युदयाच्च, नैरन्तर्यं तदपि विरोधहेतुः। उक्तं हि —

आश्रयैक्यविरुद्धो यः स कार्यो भिन्नसंश्रयः।
रसान्तरेणान्तरितो नैरन्तर्ये तु यो रसः ॥ इति।

तदयुक्तम्—परमार्थतः शान्तस्य रसान्तरस्य व्यवधावपि शृङ्गारस्यानुदयात्, उदितस्याप्यनौचित्यप्रवृत्तत्वेन रसाभासाच्च। नापि शृङ्गारबीभत्सयोर्नैरन्तर्यं विरोधहेतुः। तयोर्निरन्तरत्वेऽपि, भिन्नावलम्बनयोः विरोधादर्शनात्। सान्तरव्यवधिरपि एकावलम्बनयोरेवानयोर्विरुद्धताहेतुः।

विरुद्धावविरुद्धेन स्थायिनौ यद्रसान्तरौ ।
भवेतामङ्गिना पुष्ट्यै विरुद्धाख्यस्स सङ्करः ॥ यथा —

* अणओ ताओ महिमळि अ जइ परिमसुमु अय ।
मुहरित मह उंळव वणि नगणहद उंगसु ॥

अत्र वीररसान्तरितत्वया बीभत्सशृङ्गारसमावेशो न विरुद्ध्यते । अन्यथाऽसौ दुष्टसङ्कर एव स्यात् ।

यदुक्तम् —

विरुद्धरसयोरेको विभावो यत्र गण्यते ।
पुंस एकस्य दुष्टोऽसौ सङ्करो नेष्यते बुधैः ॥ इति ।

न परं व्यवहितयोरेवाविरुद्धत्वं; यदा तावदन्यस्मिन् स्मर्यमाणे, साम्येन विवक्षिते वा, अङ्गत्व - अङ्गित्वापन्नयोर्वा विरुद्धयोरपि न विरोधः । उक्तं हि —

स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः ।
अङ्गत्वाङ्गित्वमाप्तौ यौ न तौ दुष्टौ परस्परम् ॥ इति ।

क्रमेणोदाहरणम् —

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र हि शृङ्गारः स्मर्यते; करुणोऽनुभूयते । न चानयोर्विरोधः ।

दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतश्शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥

अत्र कामिनो दन्तक्षतानि यथा चमत्कृतिं जनयन्ति, तथा मुनिजनस्य ।

* अस्या गाथायाः समीचीनः पाठः, छाया च न लभ्येते ।

यथा च परश्रृङ्गारतद्दर्शनेत्सुकः, तद्वदेतद्दृशो मुनय इति, साम्यविवक्षया दत्तानि वस्त्राल — इति प्रतीयमानयोरपि शान्तश्रृङ्गारयोर्न विरोधः ।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैस्सदर्भस्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥

अत्र राजविषयाया रतेः, करुण इव श्रृङ्गारोऽप्यङ्गम्; तेन तयोर्न विरोधः । क्वचिद्विरुद्धयोरपि रसयोर्बाध्यबाधकभावेन प्रतिपादनं चमत्कृतिहेतुः । तत्र श्रृङ्गारेण शान्तस्य बाध्यत्वं यथा —

कालिङ्गनं भुजनिपीडितबाहुमूल-
भुग्नोन्नतस्तनमनोहरमायताक्ष्याः ।
भिक्षोपवासनियमार्कमरीचिजालैः
देहोपशोषणविधिः कुधियां क्व चैषः ॥ इति ।

शान्तेन श्रृङ्गारस्य यथा ममैव **प्रशान्तकलिकायाम्** —

आलापैरलमद्य सुभ्रु ! ललितैर्हस्तप्रयोगाञ्चितैः
मा जृम्भस्व वसन्त ! कोकिलरवैराविर्भवत्पञ्चमैः ।
अस्त्रं संहर कार्मणं मनसिज ! त्वत्कार्मुके संहितं
स्वात्मानन्दसुधाम्बुधौ निपतितं मन्मानसं मृग्यते ॥

एतेन व्यभिचारिणो व्याख्याताः । स्थायिपरतन्त्रत्वात्तेषां व्यभिचारिणां बाध्यत्वम्; यथा —

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणामुपशान्तये श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः सुकृतिनः स्वप्नेऽपि सा दुर्लभा
चेतः ! स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृति चिन्तानां पूर्वेभ्यो भावेभ्यः, उत्तरोत्तरेण

बाधः । सर्वत्र रसभावेषु बाध्यस्योक्तिः, न तावत् भावकांश्चमत्करोति, यावत्प्रकृतरसं न पुष्णाति । अत्र वितर्कादिषूद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतशृङ्गारस्यैव परिपोषः ।

---

इदानीं यथायथं विभावानुभावव्यभिचारिभिः शृङ्गारादयः प्रतिपाद्यन्ते । तत्र यथोक्तगुणयुक्तस्त्रीपुंसलक्षणेन आलम्बनविभावेन, मनोज्ञ[1]देशकालकलावेषवर्षाभोगादिभिः उद्दीपनविभावैः, मधुरव्यापाररूपैरनुभावैः, आलस्यौग्र्य[2]जुगुप्सामरणवर्जितैर्व्यभिचारिभिश्च अभिव्यक्ता प्रमोदात्मा रतिरेव — शृङ्गारः[3] ।

यदुक्तम् — रम्यदेशकलाकालवर्षभोगादिसेवनैः ।
प्रमोदात्मा रतिस्सैव यूनोरन्योन्यरक्तयोः ।
प्रकृष्यमाणः शृङ्गारो मधुराङ्गविचेष्टितः ॥ इति ।

उक्तं चान्यत्र —

पुरहर्म्यनदीचन्द्रपवनोद्यानतोयदैः ।
ऋतुशैलजलक्रीडामधुपानपुरस्सरैः ॥
[4]दीपितोद्दीपनैर्भावैः रतिरेवंविधैर्मुहुः ।
अनुभावैः परां पुष्टिं प्रापिता व्यभिचारिभिः ॥
आलस्यौग्र्यजुगुप्सादिवर्जितैः परिचित्रिता ।
आस्वाद्यमानरूपं तु तस्याः शृङ्गार उच्यते ॥ इति ।

स्त्रीपुंसरूपो विभावो यथा —

धातुश्शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्यनुपमपदे दत्तपादः स्मरस्य ।
जातं दैवात् सदृशमुभयोः सङ्गतं यत्तदेतत्
शृङ्गारस्योपवनमधुना राज्यमेकातपत्रम् ॥

---

1. देशकर्षाभोग । पा०
2. औग्र्यमरणवर्जितव्यभिचारि । पा०
3. शृङ्गारादयः । पा० (क)
4. दीपिकादीपनैः । पा० (क)

देशविभावो यथा —

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किञ्चैतस्मिन् सुरतसुहृदस्तन्वि ! ते वान्ति वाताः
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥

कालविभावो यथा —

मनोज्ञगन्धं सहकारभङ्गं पुराणशीधुं नवपाटलं च ।
संबध्नता कामिजने स्वदोषाः सर्वे निदाघावधिना प्रमृष्टाः ॥

कलाविभावो यथा —

अधरे बिन्दुः कण्ठे मणिमाला कुचयुगे शशप्लुतकम् ।
तव सूचयन्ति सुन्दरि ! कुसुमायुधशास्त्रपण्डितं रमणम् ॥

एष एव भोगविभावोऽपि ।

वेषविभावो यथा —

अथास्य रत्नग्रथितोत्तरीयमेकान्तपाण्डुस्तव लम्बिहारः ।
निश्वासहार्यंशुकमाजगाम धर्मः प्रियावेषमिवोपदेष्टुम् ॥

मधुरव्यापारो यथा —

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥

यथावा —

अलसवलितमुग्धस्निग्धनिष्पन्दमन्दैः
अधिकविलसदन्तैर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षैः
अपहृतमपविद्धं पीतमुन्मूलितं च ॥

न केवलं व्यभिचारिण एव शृङ्गाराभिव्यञ्जकाः; अपितु, सर्वेऽपि भावाः। तत्रापि आलस्यौग्र्यजुगुप्सामरणानि एकावलम्बनविभावाश्रयतया साक्षादङ्गत्वेन [1]निबद्ध्यमानानि विरुद्ध्यन्ते; नान्यथा।

यदुक्तम् —

एकोनपञ्चाशदमी च भावाः युक्त्या निबद्धाः परिपोषयन्ति।
आलस्यमौग्र्यं मरणं जुगुप्सा तस्याश्रयाद्द्वैधविरुद्धमिष्टम्॥

ननु — शङ्कौत्सुक्यं गदो ग्लानिः निद्रा सुप्तं प्रबुद्धता।
चिन्ताऽसूया[2] श्रमोन्मादौ निर्वेदो मरणं तथा।
विप्रलम्भे जडत्वाद्याः प्रयोज्या व्यभिचारिणः॥

इति मरणस्यापि शृङ्गारे निबन्धनात् कथमस्य विरुद्धतेति चेत्—ब्रूमः; मरणप्राग्रूपमरणाध्यवसाययोरपि[3] मरणव्यवहारात् तयोरेव शृङ्गाररसे समन्वयः; न तु साक्षान्मरणस्य, तस्य करुणाङ्गत्वात्।

उक्तं हि — मरणात्प्रागवस्थापि मरणं मुनिनोच्यते।
मरणाध्यवसायो वा स्वेच्छा तत्र विपश्चिताम्॥ इति।

मरणप्राग्रूपं यथा —

अच्छिन्नं नयनाम्बु बन्धुषु कृतं, चिन्ता गुरुभ्योऽर्पिता,
दत्तं दैन्यमशेषतः परिजने, तापस्सखीष्वाहितः।
अद्य श्वः परनिर्वृतिं व्रजति सा श्वासैः परं खिद्यते
विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तथा॥

मरणाध्यवसायो यथा —

दत्ते चञ्चुर्मुकुलनि रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति वकुलामोदगर्भस्य वायोः।

1. निपीड्यमाना। पा० (क)
2. तथा। पा० (क)
3. रपि मरणव्यवसाययोरपि मरण। पा० (क)

दाम प्रेम्णा सरसबिसिनीपत्रमात्रान्तरीय-
स्ताम्यन् ( केकी ? ) श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥

यथावा —

याताः किं न मिलन्ति सुन्दरि ! पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशाऽसि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां सहितेन भाविमरणोत्साहस्तया सूचितः ॥

प्रमोदात्मा रतिर्यथा —

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुरास्सन्त्येवान्ये मनो मदयन्ति मे ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥

तत्र शृङ्गारो द्विविधः ; विप्रलम्भः, सम्भोगश्चेति । विप्रलम्भोऽपि द्विविधः ; अयोगो, विप्रयोग इति ।

अयोगो नाम — दर्शनात्, श्रवणाद्वा विस्मयानन्दाविष्टयोः समुपारूढपरस्परप्रेमातिरेकयोः यूनोः, दैवात्, पारतन्त्र्याद्वा सङ्गमाभावः। तदुक्तम् —

अप्रसङ्गात्तयोरेव रागात्सन्दर्भमिच्छतोः ।
असङ्गमादयोगाख्यो विप्रलम्भोऽस्ति चित्तकृत् इति ॥

यथा — निकामं श्यामाङ्गी सरसकदलीगर्भसुभगा
कलाशेषामूर्तिः शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाहविधुरां
इयं नः कल्याणी रमयति मतिं, कम्पयति च ॥

यथावा —

यदिन्दावानन्दं प्रणयिनि जने वा न भजते
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम् ।

प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डुमधुरा
वपुः श्यामं श्यामं वहति रमणीयं च भवति ॥

अत्र द्वयोरप्यभिलाषादयो क्रमान्निबद्धव्या' ।

अभिलाषो यथा —

प्रविशति यथा गेहं तस्माद्बहिश्च विचेष्टते
वदति च भृशं सख्या सार्धं सहासमिवोत्सुका ।
दयितनयनालोके मन्दं यथा न चलयत्यसौ
मृगदृशि तवैतस्मान्मन्ये स्मरः कृतसङ्गरः ॥

चिन्ता यथा —

सत्यं दुर्लभ एव वल्लभजनो रागो ममास्मिन् पुनः
कोऽप्यन्योऽतिगुरुर्न याति निपुणा सख्यस्य सम्बोधने ।
सञ्चिन्त्येति मृगीदृशा प्रियतमे दृष्टे श्लथां मेखलां
बध्नन्त्या न गतं स्थितं न च लसद्धासो न वा संवृतम् ॥

स्मृतिर्यथा —

इन्दुं निन्दति पद्मकन्दकदलीतल्पं न वा मन्यते
कर्पूरं किरति प्रयाति न रतिं प्रालेयतारागृहे ।
श्वासैः केवलमेव खेदिततनुर्ध्यायत्यसौ बालिका
यत्तत्कोऽपि युवा ध्रुवं स्मरसुहृच्चेतस्यमुष्यास्स्थितः ॥

गुणकीर्तनं यथा —

तद्वक्त्रं हसितेन्दुमण्डलरुचि स्फारं तदालोकितं
सा वाणी जितकामकार्मुककथा सौन्दर्यमेवास्य तत् ।
इत्थं सन्ततमालि ! वल्लभतमध्यानप्रसक्तात्मनः
चेतश्चुम्बितकालकूटमिव मे कस्मादिदं दह्यते ॥

उद्वेगो यथा —

अन्याङ्गारं कलयति (सि?) पुरश्चक्रवाकी च (व?) चन्द्रं
बद्धोत्कम्पा शिशिरमरुता दह्यसे पद्मिनीव ।

प्राणान् धत्से कथमपि बलात् गच्छतश्शालतुल्यां
तत्केनासौ सुतनु जनितो मान्मथस्ते विकारः ॥

विप्रलापो यथा —

इत्थं तेन निरीक्षितं, स च मयाऽप्येवं समालोकितः
तेनोक्तं सुभगेन, तं च (सुभगं?) दत्तं वचो मन्दया ।
तत्सत्यं कथयालि! किं स सुभगः कुप्येत मय्युच्चकैः
इत्युक्त्वा सुदृशा तया च चलितग्रीवाद्दृशौ स्फारिते ॥

उन्मादो यथा—

देवीवानिमिषेक्षणा विलिखति क्षोणीं श्वसत्युच्चकैः
किञ्चिद्ध्यायति निश्चलं च नलवद्रोमाञ्चिता कम्पते ।
रोदित्यङ्कगतां विलोक्य सुचिरं वीणामियं व्याहृतिं
स्वल्पैरेव दिनैरियं वरतनुः केनापि संशिक्षिता ॥

व्याधिर्यथा —

तापश्शोषितचन्दनोदकभरः श्वासो विकीर्णोऽधरो
कर्पूराभिभवप्रचण्डपटिमा गण्डस्थले पाण्डिमा ।
म्लायद्बालमृणालनाललतिका प्राप्ता तनुस्तानवं
तन्वङ्ग्यां कथितः स्मरेण गुरुणा कोऽप्येष कष्टक्रमः ॥

जडता यथा —

दृष्टिर्निश्चलतारकाधरदलं श्वासैः कृतं धूसरं
प्राप्तं वासरचन्द्रबिम्बपदवीं वक्त्रं विनष्टा स्मृतिः ।
हुङ्कारः परमेक एव वचनस्थाने ततस्साम्प्रतं
मन्येऽस्याः कुसुमायुधः सशिबिरः प्रत्यङ्गमावासितः ॥

मरणं च असौन्दर्यान्न निबद्ध्यते । प्रत्युज्जीवनसम्भावनादशायां केचिन्मरणं बध्नन्ति । यदुक्तम् —

केचित्तदपि बध्नन्ति प्रत्युज्जीवनकाङ्क्षया । इति ।

यावत्प्रत्युज्जीवनसंभावना तावन्मते करुण एव रसः। प्रत्युज्जीवनसंभावनायां तु शृङ्गार एवेति निश्चितिः।

मृते त्वेकत्र यत्रान्यः प्रलपेच्छोक एव सः।
निराश्रयत्वान्न्छृङ्गारः प्रत्यापन्ने तु नेतरः॥ इति।

प्राप्तपूर्वयोरप्राप्तिर्विप्रयोगः। स च मान-प्रवासाभ्यां द्विधा। मानविप्रलम्भोऽपि प्रणयेर्ष्याभ्यां द्विधा। तत्र प्रणयमानः स्त्रीपुंसयोरपि; ईर्ष्यामानः स्त्रीणामेव।

तत्र प्रणयमानो यथा —

प्रणयकुविआण दोण्णोवि अलिअप्पसुत्ताण माणउल्लाणं।
निच्चलणिरुद्धणीसासदिण्णअण्णाण को मल्लो॥

[छा॥ प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवतोः।
निश्चलनिरुद्धनिश्वासदत्तकर्णयोः को मल्लः॥]

ईर्ष्यामानस्तु—नायकस्यान्यासङ्गे दृष्टे, श्रुते वा, अनुमिते वा जायत इति त्रिधा।

दृष्टे यथा— तइआ मह गंडत्थलणिमिअं दिट्ठिं णणासि अण्णत्तो।
एण्हिं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी॥

[छा॥ तदा मम गण्डस्थलनिमग्नां दृष्टिं नानैषीरन्यत्र।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः॥]

श्रुते यथा—

सुभ्रु! त्वं नवनीतकल्पहृदया केनापि दुर्मन्त्रिणा
मिथ्यैव प्रियकारिणा मधुमुखेनास्मासु चण्डीकृता।
किन्त्वेतद्विमृश क्षणं प्रणयिनामेणाक्षि! कस्ते हितं
[1]किं धात्री तनया सखी किमु वयं किञ्चास्मदीयस्सुहृत्॥

अनुमितोऽपि गोत्रस्खलनभोगाङ्कोत्स्वप्नायितैः त्रिधा।

1. क्रीडाक्रीतनया। पा० (क)

गोत्रस्खलनानुमानादीर्ष्यामानो यथा —

नाम वल्लभजनो न ते मया प्राप्य भाग्यमपि तस्य काङ्क्षते ।
लोलुपं बत मनो ममेति तं गोत्रविस्खलितमूचुरङ्गनाः ॥

भोगाङ्कानुमानाद्यथा —

ओल्लोल्लकरअरअणक्खएहि तुह लोअणेसु मह दिण्णम् ।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिआ ॥

[छा॥ अर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम् ।
रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते ॥]

उत्स्वप्नायितानुमानाद्यथा —

स्वप्नकीर्तितविपक्षमङ्गनाः प्रत्यभैत्सुरवदन्त्य एव तम् ।
प्रच्छदान्तगलिताश्रुबिन्दुभिर्भिन्नशङ्खवलयैर्विवर्तनैः ॥

इत्थम्, अयोगेन [1]सह मानाद्विप्रलम्भभेदास्सप्त । प्रवासविप्रलम्भोऽपि द्विधा; आकस्मिको, बुद्धिपूर्वकश्चेति । आकस्मिकोऽपि संभ्रमशापाभ्यां द्विधा । संभ्रमोत्पन्नप्रवासो यथा—

तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्त[2]मगोचरं नयनयोर्यातेति कोऽयं विधिः ॥

शापोत्पन्नप्रवासो यथा —

त्वामालिख्य प्रणयकुपितां धातुरागैश्शिलायां
आत्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालिप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥

---

1. सन्दर्भमानाद्द्विधा । विप्रलम्भ । पा० (क)
2. मदर्शनान्नयनयोः । पा० (क)

बुद्धिपूर्वकप्रवासो यथा —

प्रस्थानं वलयैः कृतं प्रियसखैरास्रैरजस्रं गतं
[1]दृष्ट्या न क्षणमास्थितं व्यवसितं चित्तेन गन्तुं पुरा ।
यातुं निश्चितचेतसि प्रियतमे सर्वैस्समं प्रस्थितं
गन्तव्ये सति जीवितप्रियसुहृत्सार्धं किमुत्सृज्यते ॥

बुद्धिपूर्वकस्यापि कालभेदेन त्रयो भेदाः इति, प्रवासविप्रलम्भभेदाः पञ्च । इत्थं, पूर्वभेदैस्सह विप्रलम्भस्य द्वादश भेदाः ।

यदुक्तम् — "मानात् प्रवासान्मरणाद्वियोगोऽपि त्रिधा मतः" इति । तदयुक्तम् — मरणाद्वियोगानुपपत्तेः । वियोगो नाम विप्रलम्भः ; स च शृङ्गारः । कथं तस्य मरणात्संभवः ? शृङ्गारश्च मरणहेतुकश्चेति विप्रतिषिद्धम् । अथ मरणादूर्ध्वं कुतोऽपि प्रत्ययादन्यतरस्य सापेक्षभावत्वे सति वियोगो मरणादिति चेत् ; न च तस्यापि प्रवासहेतुकत्वात् प्रवास एवान्तर्भावः । सापेक्षभावत्वे सति वियोगः ; तथैव प्रवासः । तस्य मरणानन्तरमप्यनुच्छेदात् ; उच्छेदे वा करुण एव रसः स्यात् , न विप्रलम्भः । अयं हि करुणाद्विप्रलम्भस्य भेदः — यत्सापेक्षभावत्वम् ।

उक्तं हि — विभिन्नः करुणादेष स्थायिभेदादिहेष्यते ।
तदा सापेक्षभावत्वादित्याह भरतो मुनिः ॥

सापेक्षभावो विप्रलम्भो यथा —

अथ मदनवधूरुपप्लवान्तर्व्यसनकृशा प्रतिपालयांबभूव ।
शशिन इव दिवाकरस्य रेखा किरणपरिक्षयधूसरा प्रदोषम् ॥

निरपेक्षभावः करुणो यथा —

त्रस्तैकहायनकुरङ्गविलोलदृष्टे -
स्तस्याः परिस्फुरितगर्भभरालसायाः ।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥

1. धृत्या । पा० (क)

प्रीत्या अनुरागनिघ्नयोः परस्परदर्शनाद्यनुभवः संभोगः । यदुक्तम् —

यत्र प्रबलकन्दर्पप्रेरितौ नवकामिनौ ।
संभुक्तौ दर्शनादीनि संभोगाय निगद्यते । इति ।

तस्य परस्परावलोकनपरिष्वङ्गपरिचुम्बनाद्यनेकभेदैरपरिच्छेद्यस्य भोगात्मना एकत्वेन व्यापारितस्यापि अवच्छेदकविप्रलम्भभेदः कल्प्यते । यथा — वियोगानन्तरसंभोगो, मानानन्तरसंभोगः, प्रवासानन्तरसंभोगः - इति । आद्यो यथा —

वीतेच्छं दयितो न निश्चलदृशा दृष्टो हतव्रीलया
गाढालिङ्गनलालितां तनुलतामालिङ्ग्य कः प्रस्थितः ।
उत्कण्ठाभरनिर्भरेण मनसा साऽहं तथैव स्थिता
किं सख्याः प्रथमस्समागमविधिः विघ्नैस्समं जायते ॥

प्रणयमानानन्तरसंभोगो यथा —

एकस्मिञ्छयने पराङ्मुखतया वीतोत्तरं ताम्यतोः
अन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषोः
भग्नो मानकलिस्सहासरभसव्यावृत्तकण्ठग्रहम् ॥

ईर्ष्यामानानन्तरसंभोगो यथा —

कान्ते ! किं कुपितासि, कः परिजने प्राणेश ! कोपो भवेत् ?
कोऽयं सुभ्रु पर, स्त्वमेव दयितो, दासोऽस्मि किं ते परः ।
इत्युक्त्वा प्रणतः प्रियः क्षितितलादुत्थाप्य सानन्दया
नेत्राम्भःकणिकांचिते स्तनतटे तन्व्या समालिङ्गितः ॥

प्रवासानन्तरसंभोगो यथा —

आनन्दोद्भवबाष्पपूरपिहितं चक्षुः किरन्नेक्षितं
बाहू सीदत एव कम्पविधुरौ शक्तौ न कण्ठग्रहे ।
वाणी साध्वसगद्गदाक्षरपदा संभोगलोलं मनो
हा सख्यः प्रियसङ्गमोऽपि सुचिरादादौ वियोगायते ॥

संभोगविप्रलम्भान्ते संभोगो वर्णनीयः; तथा विशेषेण मरणान्तरितप्रवासान्ते इति स्थितिः। यदुक्तम् —

संभोगो विप्रलम्भान्ते मरणादप्यनन्तरम् ।
अवश्यं वर्णयेदित्थं शृङ्गारः पुष्टिमश्नुते ॥ इति ।

मरणानन्तरसंभोगस्तु कादम्बरी-चन्द्रापीडयोः, पुण्डरीक-महाश्वेतयोर्वा लक्षणीयः।

अत्रार्ये भवतः —

ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसस्त्वयं भवति ॥

नयनवदनप्रसादैःस्तिमितमधुरवचोधृतिप्रमोदैः ।
ललितैश्चाङ्गविकारैस्तस्याभिनयः प्रयोक्तव्यः ॥ इति ।

---

हास्यरसो हासप्रभवः। तस्य विकृताकृतिविश्लेषादयो विभावाः। गण्डोल्लासननयनविकासदशनप्रकाशा अनुभावाः। निद्रालस्यश्रमादयो व्यभिचारिणः।

अत्र मुनिः,

यथा— हास्यो नाम हासस्थायिभावात्मकः। स च विकृतवेषालङ्कारधाष्टर्यचेष्टालौल्यकुहकासत्प्रलापव्यङ्गचदर्शनदोषोदाहरणादिभिर्विभावैरुत्पद्यते । [1]तस्योष्ठविवरणदशनदर्शननासानिकूणनकपोलस्पन्दनदृष्टिन्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणादिभिरनुभावैरभिनयः प्रयोक्तव्यः। व्यभिचारिणश्चास्य—ग्लान्यवहित्थाऽऽलस्यतन्द्रीनिद्रास्वप्नप्रबोधासूयादयः — इति ।

हास्यश्च द्विविधः, [2]आत्मस्थः परस्थश्चेति। आत्मस्थैर्विभावैरुत्पन्नो [3]हासः आत्मस्थः; परस्थैस्तु परस्थ इति ।

अत्र मुनिः — “द्विविधश्चायमात्मस्थः परस्थश्च। यदा स्वयं हसति, तदा आत्मस्थः। यदा तु परं हासयति, तदा परस्थः” इति ।

---

1. तस्योष्ठविवरण · पा०
2. आत्मार्थः परार्थश्चेति । पा० (क)
3. भाव । पा० (क)

आत्मस्थो यथा —

पाणौ कङ्कणमुत्फणः फणिपतिर्नेत्रं ज्वलत्पावकं
कण्ठः कुण्ठितकालकूटकुटिलो वस्त्रं [1]गजार्द्राजिनम् ।
गौरी लोचनलोभनाय सुभगो वेषो वरस्येति मे
गण्डोल्लासिविकासितः पशुपतेर्हासोद्गमः पातु वः ॥

परस्थो यथा —

भिक्षो मांसनिषेवणं प्रकुरुषे? किं तेन मद्यं विना;
किं ते मद्यमपि प्रियं? प्रियमहो वेश्याङ्गनाभिस्सह ।
वेश्यामद्यरुचेः कुतस्तव धनं? द्यूतेन, चौर्येण वा;
चौर्यद्यूतपरिग्रहोऽपि भवतो? दासस्य कऽन्या गतिः ॥

तत्रोत्तमस्य स्मितं, हसितम्;[2] मध्यमस्य विहसितमुपहसितम्; अधमस्यापहसितमतिहसितं च [3]इति । एषां च स्वपरस्थविभावभेदात् प्रत्येकं द्वैविध्यमिति हासस्य द्वादश भेदाः ।

अत्र मुनिः —

स्मितमथ हसितं विहसितमुपहसितं चापहसितमतिहसितम् ।
द्वौ द्वौ भेदौ स्यातामुत्तममध्यमाधमप्रकृतौ ॥
स्मितहसिते ज्येष्ठानां मध्यानां विहसितोपहसिते च ।
अधमानामपहसितं तथातिहसितं च विज्ञेयम् ॥

अत्र श्लोकः — ईषद्विकसितैर्गण्डैः कटाक्षैस्सौष्ठवान्वितैः[4] ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥
प्रफुल्लाननेत्रं तु गण्डैर्विकसितैरथ ।
किञ्चिल्लक्षितदन्तं च हसितं तद्विधीयते ॥

---

1. गजेन्द्राजिनम् । पा० (क)
2. स्मितहसिते, मध्यमस्य विहसितोपहसिते । पा० (क)
3. इतिर्नास्ति (क) पुस्तके ।
4. सोष्मणाहितैः । पा० (क)

उत्कम्पितांसकशिरस्तच्चोपहसितं भवेत् ।
कलागतं सास्यरागं तद्वै विहसितं भवेत् ॥

उत्फुल्लनासिकं यत्तु जिह्मदृष्टिनिरीक्षितम् ।
आकुञ्चितांसकशिरस्तच्चोपहसितं भवेत् ॥

अस्थानहसितं यत्तु साश्रुनेत्रं तथैव च ।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ॥

संरब्धसाश्रुनेत्रं च विक्रुष्टस्वरमुद्धतम् ।
करोपगूढपार्श्वं यत्तच्चातिहसितं भवेत् ॥ इति ।

एषामुदाहृनयः स्वयमुत्प्रेक्ष्याः ।

हास्यो यथा —

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
[1]तारस्वरं प्रहितसीत्करणानुयातं
हा हा ! हतोऽहमिति रोदिति विष्णुशर्मा ॥

अत्रार्ये भवतः —

विपरीतालङ्कारैर्विकृताचाराभिधानवेषैश्च ।
विकृतैरर्थविशेषैः हसतीति रसः स्मृतो हास्य ॥

विकृताकारैर्वाक्यैरङ्गविकारैश्च विकृतवेषैश्च ।
हासयति जनं यस्मात्तस्माज्ज्ञेयो रसो हास्यः ॥

वीरो नाम रस उत्साहप्रभवः, तस्यासंमोहाध्यवसायादयो विभावाः, स्थैर्यधैर्यादयोऽनुभावाः, मतिगर्वादयो व्यभिचारिणः ।

अत्र मुनिः — अथ वीरो नामोत्तमप्रकृतिः उत्साहात्मकः । सच असंमोह अध्यवसायविनयबलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते । तस्य स्थैर्यधैर्य-

---

1. तारस्वनं प्रहितसीत्कमदात्प्रहारं ! पा० (क)

त्यागशौर्यवैशारद्याक्षेपवाक्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य स्मृतिमतिगर्ववेगौग्र्यामर्षरोमाञ्चादयः —" इति ।

उत्साहो यथा —

मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापतीन्
आश्वास्याश्रुमुखानपि प्रियसखान् प्रेष्यान् समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥

स च वीरस्त्रिविधः, दयावीरो रणवीरो दानवीर इति ।

यदुक्तम् —

वीरः प्रतापविनयाध्यवसायसत्त्व-
न्मोहाविषदनयविस्मयविक्रमाद्यैः ।
उत्साहभूस्स च दयारणदानयोगा-
त्त्रेधा किलात्र मतिगर्वधृतिप्रहर्षाः ॥

दयावीरो यथा —

सिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तदापि तावत् किं भक्षणात्त्वं विरतो गरुत्मन् ! ॥

रणवीरो यथा —

तातः प्रेमजडः करोत्यनुचितं त्याज्यस्स पूज्योऽपि सन्
कैकेय्याः[1] कुचरित्रमेतदिति चेत्तन्मातृस कुण्ठक्रमः ।
आर्यश्चेद्भवतो विकर्तनकुले कर्तुं कलङ्कं स्थितो
गुञ्जज्ज्यामुखरं धनुर्ननु मयाप्यद्यैव सम्पाद्यते ॥

दानवीरो यथा —

आगताध्यवसितेन चेतसा सत्त्वसम्पदविकारिमानसः ।
तत्र नाभवदसौ महाहवे शात्रवादिव पराङ्मुखोऽर्थिनः ॥

1. कैकेयीकुचरित्र - पा० (क)

प्रस्वेदरक्तवदननयनत्वादिक्रोधानुभावरहितो युद्धवीरः; अन्यथा, रौद्रः - इत्यनयोः विवेकः। अत्रार्ये भवतः —

उत्साहाध्यवसायादविषादा द्विस्मयादसंमोहात्।
विविधादर्थविशेषाद्वीररसो नाम संभवति ॥
स्थितिधैर्यशौर्यगर्वैरुत्साहपराक्रमैः प्रभावैश्च।
वाक्यैराक्षेपकृतैर्वीररसस्सम्यगभिनेयः ॥ इति।

---

अद्भुतो विस्मयस्थायिभावात्मकः। तस्यातिलोकाः पदार्था विभावाः। अस्य नयनविकासाश्रुकम्पनादयोऽनुभावाः। हर्षावेगधृत्यादयो व्यभिचारिणः।

अत्र मुनिः — अथ अद्भुतो नाम विस्मयस्थायिभावात्मकः। स च — दिव्यजनदर्शनेप्सितावाप्त्युपवनदेवकुलाभिगमनसभाविमानमायेन्द्रजालसाधना[1]मानुषकर्मातिशया - दिभिर्विभावैः उत्पाद्यते। तस्य नयनविस्तारानिमिषप्रेक्षणरोमाञ्चहर्षस्वेदसाधुवाददानप्रबन्धहाहाकारबहुवचनचेलाङ्गुलिभ्रमणादिभिः अनुभावैरभिनयः प्रयोक्तव्यः। व्यभिचारिणश्चास्य स्तम्भाश्रुस्वेदगद्गदरोमाञ्चावेगसंभ्रमप्रहर्षचपलतोन्मादापस्मृतिजडतामोहमरणादयः।

विस्मयो यथा —

स्तनावालोक्य तन्वङ्ग्याः शिरः कम्पयते युवा।
तयोरन्तरनिर्मग्नां दृष्टिमुत्पाटयन्निव ॥

अयं चाद्भुतो द्विविधः, दिव्य आनन्दजश्चेति।

यदुक्तं मुनिना —

दिव्यश्चानन्दजश्चैव यथाऽऽख्यातोऽद्भुतो रसः।
दिव्यदर्शनजो दिव्यो हर्षादानन्दजः स्मृतः ॥ इति।

दिव्यो यथा —

एष ब्रह्मा सरोजे रजनिकरकलाशेखरश्शङ्करोऽयं
दोर्भिर्दैत्यान्तकोऽयं सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः।

---

1. नकर्मातिशयादिभिः—पा० (क)

एषोऽप्यैरावतस्थः त्रिदशपतिरयं देवि ! देवास्ततोऽन्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥

आनन्दजो यथा —

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्भवः
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
प्राचुर्यात्सकपालसम्पुटमितब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥

अत्रार्ये भवतः —

यत्त्वतिशयार्थमुक्तं वाक्यं शिल्पं च कर्मरूपं वा ।
एभिस्त्वर्थविशेषै रसोऽद्भुतो नाम सम्भवति ॥
स्पर्शग्रहणोल्लसनैर्हाहाकारैश्च साधुवादैश्च ।
वेपथुगद्गदवचनैः स्वेदाद्यैरभिनयस्तस्य ॥

---

जुगुप्सात्मको बीभत्सः। तस्यात्यन्ताहृद्यक्रिमिकीकसपूयादयो विभावाः। हृल्लास-गात्रसङ्कोचननासामुखविकूणनादयोऽनुभावाः। अपस्मारमोहगद्गदादयो व्यभिचारिणः।

जुगुप्सा यथा —

उत्तालताटकोत्पातदर्शनेऽप्यप्रकम्पितः ।
नियुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सति ॥

बीभत्सो द्विविधः, उद्वेगी क्षोभणश्चेति । यदुक्तम् —

बीभत्सः क्षोभणोऽशुद्धादुद्वेगी स्याद्वितीयकः ।
विष्ठाक्रिमिभिरुद्वेगी क्षोभणो रुधिरादिजः ॥ इति ।

उद्वेगी यथा —

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ [1]पृथूच्छोफभूयांसि मांसा-
[2]न्यंसस्फिक्-पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।

---

1. पृथक्से भूयांसि । पा० (क)
2 न्यासर्पत्पृष्ठपीठाद्यवयव । पा० (क)

[1]आत्तस्नाय्वान्त्रनेत्रात् प्रकटितदशनः प्रेतरङ्कः[2] करङ्कात्
अङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

क्षोभणो यथा —

आन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्किङ्किणी-
प्रायःप्रेङ्खितभूरिभूषणरवैराघोषयन्त्याम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लस-
द्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥

विरक्तानां रमणीयेष्वपि कान्ताजघनस्तनादिषु घृणाशुद्धानां बीभत्सरसो जायत इति त्रिविधो वा । यदुक्तम् —

बीभत्सः क्रिमिपूतिगन्धवमथुप्रायैर्जुगुप्सैकभूः
उद्वेगी रुधिरान्त्रकीकसवसामांसादिभिः क्षोभणः ।
वैराग्याज्जघनस्तनादिषु घृणाशुद्धोऽनुभावैः कृतो[3]
नासावक्त्रविकूणनादिभिरिहावेगो विशङ्कादयः ॥

घृणाशुद्धो यथा —

[4]लालां वक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ ।
मांसास्थिकूटं जघनं जनः कामग्रहातुरः ॥

यथा ममैव प्रशान्तकलिकायाम् —

अहो धिक् धिक् रेतःक्षतजपरिणामः पुनरयं
[5]कुचाभोगप्रायः पृथुजघनभारालसगतिः ।
पुरन्ध्रीति स्त्रीति स्मितमधुरवक्त्रेति महिले-
त्यनन्ताश्चर्यैर्मां शमयति च सन्तापयति च ॥

---

1. आत्तस्नाय्वात्तनेत्र. । पा० (क)
2. रङ्क करत्रि । पा० (क)
3. युतः । पा० (क)
4. बालानक्त्रा सह वेत्ति । पा० (क)
5. कचाभोग । पा० (क)

अत्रार्ये भवतः —

अनभिमतदर्शनेन च गन्धरसस्पर्शदोषैश्च ।
उद्वेजनैश्च बहुभि[1]र्बीभत्सरसस्समुद्भवति ॥
मुखनेत्रयुगविकूणननासाप्रच्छादनाद्यवनतास्यैः ।
अव्यक्तपादपतनैर्बीभत्सः सम्यगभिनेयः ॥

— — —

भयानको भयस्थायिभावात्मकः । तस्य घोरसत्वदर्शनादयो विभावाः । करचरणकम्पस्वेदादयोऽनुभावाः । शङ्कापस्मारादयो व्यभिचारिणः ।

अत्र मुनिः —

"अत्र भयानको नाम भयस्थायिभावात्मकः । स च विकृत[2]स्वसत्व-दर्शनशिवोलूकत्रासोद्वेगारण्यशून्यभवनश्मशानप्रवेशनमरणस्वजनवधबलदर्शनश्रवणादि-भिः विभावैरुत्पाद्यते । तस्य [3]प्रवेपितकरचरणनयनवदन[4]गात्रपुलकमुखवैवर्ण्यस्वर-भेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य स्तम्भस्वेदवैवर्ण्यशङ्का-दैन्यावेगचापलत्रासापस्मारमरणादयः ।

भयं यथा —

भीमदंष्ट्रमरुणोर्ध्वमूर्धजं शैलवर्षजलदोदरच्छवि[1] ।
तात ! ते इतवतरसतोऽपि मे रूपमेतदवशं भयावहम् ॥

भयानको यथा —

कोशान् गेहेष्वमुञ्चन् पथि करितुरगान् बान्धवानर्धमार्गे
दुर्गेष्वन्तःपुराणि प्रतिरवचकिताः पर्वतेभ्यो निवृत्ताः ।
यस्योद्वेगे भ्रमन्तस्समसमयसमारम्भगम्भीरभेरी-
भाङ्काराकीर्णकर्णज्वरभयतरलप्रेक्षिताशाः क्षितीशाः ॥
गुरुभ्यः स्वामिनो वापि भीतः स्याद्विनयान्वितः ।
तेनोत्तमोऽपि कुर्वीत निर्भयः कृत्रिमं भयम् ॥

---

1. वीररसः । पा० (क)
2. तरसत्व । पा० (क)
3. प्रवेशित । पा० (क)
4. वलन । पा० (क)

इत्युक्तेः कृतकोऽपि भयानकभेदो लक्ष्यः । अत्रार्ये भवतः —

विकृतरवसत्वदर्शनसङ्ग्रामारण्यशून्यगृहगमनात् ।
गुरुनृपयोरपराधात् कृतकश्च भयानको ज्ञेयः ॥
करचरणवेपनेन स्तम्भेन च गात्रहृदयकम्पेन ।
शुष्कोष्ठतालुकण्ठैः भयानको नित्यमभिनेयः ॥

---

रौद्रस्तु क्रोधस्थायिभावात्मकः । तस्य मात्सर्यवैरवैकृतादयो विभावाः । प्रस्वेदरक्तवदननयनत्वाद्योऽनुभावाः । औग्र्यामर्षावेगादयो व्यभिचारिणः । अत्र मुनिः — अत्र रौद्रो नाम क्रोधस्थायिभावात्मकः । रक्षोदानवोद्धतमनुष्यप्रभवसङ्ग्रामहेतुकः । स च क्रोधामर्षणाधिक्षेपावमानाकुष्टकलहवाक्पारुष्यानृतवचनोपयातमात्सर्यद्रोहादिविभावैरुत्पाद्यते । तस्य च ताडनपाटनपीडनछेद्यभेद्यप्रहरणापत्वारणशस्त्रसंपातसंप्रहाररुधिराकर्षणादीनि कर्माणि । पुनश्च रक्तनयनभ्रुकुटीकरणावष्टम्भनदन्तोष्ठपीडनगण्डस्फुरणहस्ताग्रनिष्पेषणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य साटोपोत्साहामर्षावेगचपलतोग्रतास्वेदवेपथुरोमाञ्चगद्गदादयः ।

क्रोधो यथा —

शान्तिः कुतस्तस्य भुजङ्गशत्रोर्यत्रानुबद्धानुशया सदैव ।
जागर्ति [1]वक्त्रोद्यतभीमदंष्ट्राकोटिर्विषोद्गारगुरुर्भुजङ्गी ॥

रौद्रो यथा —

कठोरास्थिग्रन्थिव्यतिकरखणत्कारमुखरः
खरस्नायुच्छेदे क्षणविहितवेगव्युपरमः ।
निरातङ्कं पङ्केष्विव पिशितखण्डेषु निपतन्
असिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु ॥

अत्रार्ये भवतः —

शस्त्रप्रहारताडनघनविच्छेदविदारणैश्चैव ।
सङ्ग्रामसंभ्रमाद्यैरेभिस्सञ्जायते रौद्रः ॥

---

1. भातोद्यतभीमदंष्ट्रा । पा०

मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥

यथा — अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तितानि ॥

वर्गाणां प्रथमेनान्वितो द्वितीयः, तृतीयेनान्वितश्चतुर्थः, उभावपि, यस्य कस्यचित्तुल्यौ तौ, रेफणकारौ चेति तद्युक्ताः, टवर्गः शकारषकारौ च ओजसो व्यञ्जकवर्णाः । दीर्घस्समासो, विकटा च सङ्घटना ।

उक्तं हि —योग आद्यतृतीयाभ्यामन्त्ययो रेणतुल्ययोः ।
टादिश्शषौ वृत्तिदैर्घ्यं गुम्भ उद्धत ओजसि ॥ इति ।

यथा —मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोद्धारणेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणेऽपि प्रयासः ॥

प्रसादस्तु सर्वसाधारणत्वात सर्वैरपि वर्णगुम्भसमासैरभिव्यज्यते, यदि श्रवणमात्रादर्थप्रतीतिः । उक्तं हि —

श्रुतिमात्रेण शब्दानां येनार्थप्रत्ययो भवेत् ।
साधारणस्समग्राणां स प्रसादो गुणः स्मृतः ॥ इति ।

शब्दवैमल्यादर्थवैमल्यम्; अर्थवैमल्याद्रसवैमल्यमित्यस्याभिप्रायः । यथा —

परिम्लानं पीनस्तनजघनसङ्गादुभयतः
तनोर्मध्यस्यान्तःपरिमिलनमप्राप्य हरितम्[1] ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्यास्सन्तापं वदति बिसिनीपत्रशयनम् ॥

माधुर्यस्य, संभोगाद्विप्रलम्भे, विप्रलम्भादपि करुणे, रसातिशयः ।

---

1. परितः । पा० (क)

अत्यन्तद्रुतिहेतुत्वात् संभोगे माधुर्यं यथा —

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम् ।
मेखलाभिरसकृच्च बन्धनं वञ्चयन् प्रणयिनीरवाप सः ॥

विप्रलम्भे माधुर्यं यथा —

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठा गुरुषु दिवसेष्वेषु गच्छत्सु बाला
जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा ॥

करुणे माधुर्यं यथा —

[1]अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी[2] ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥

अत्र रसविदां चमत्कृतिरेव प्रमाणम् ।

शान्ते तु विचारितचरमेव । यथा —

ये वर्धन्ते धनपतिपुरःप्रार्थनादुःखदीर्घाः
ये चाल्पत्वं दधति विषयाक्षेपपर्यन्तबुद्धेः ।
तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥

यथा वा ममैव प्रशान्तकलिकायाम् —

मैत्र्यां मैत्रीं रचय करुणां स्वामिनीं तां निदध्याः
मोदे मोदं वह हृदय भोः तामुपेक्षां जुषस्व ।
संसारेऽस्मिन् विरम विरसे विद्युदालोकलोले
निर्व्याक्षेपं कलय दिवसान् पक्षपातेन शम्भोः ॥

अनौचित्यप्रयुक्तास्त एव रसभावाः — रसाभासाः, भावाभासाश्च । उक्तं हि – "तदाभासा अनौचित्यप्रवर्तिताः" इति ।

---

1. अधुना । पा० (क)
2. लिङ्गितपीवरस्तनी । पा० (क)

रसाभासो यथा —

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरी ध्यायसि तु यम् ॥

अनेककामुकविषयत्वमभिलाषस्य द्योत्यते ;

आलिङ्गत्यन्यमन्यं रमयति वचसा लीलया वीक्षतेऽन्यम्
रोदित्यन्यस्य हेतोः छलयति शपथैश्चान्यमन्यं वृणीते ।
सार्धं चान्येन शेते शयनमपि गता चिन्तयत्यन्यमन्यं
स्त्री मायेयं प्रचण्डा जगदहितकरी कापि केनापि सृष्टा ॥

भावाभासो यथा —

राकासुधाकरमुखी धवलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमा स्यात् ।
तत्किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥

अत्र चिन्ता अनौचित्यप्रवृत्ता । इत्थमेव रसान्तरेष्वप्यूह्यम् ।

यदुक्तम् — निरिन्द्रियेषु तिर्यक्षु रण्डादिष्वपि मुख्यतः ।
रसभावसमारोपादाभासो रसभावयोः ॥ इति ।

तदविचारितरमणीयमाभासमात्र एव । तथाहि —

निरिन्द्रिया वृक्षलतादयः । तिर्यञ्चोऽपि मृगादयः । रण्डापाषण्डादेरपि विप्रलम्भ-संभोगयोरनौचित्यप्रवृत्तत्वादेव श्रृङ्गाराभासत्वम् । प्रेमोदयस्ततस्तदाभास उच्यते । तत्र यदि पुनर्निरिन्द्रियादौ रसभावौ स्तः, किं तत्रारोपकथायाः ? यदि तौ न स्तः, कथं तत्रारोपो युज्यते ? आरोप्यमाणारोपविषययोः सादृश्याभावात् । सादृश्यनिबन्धनो हि सर्वत्र समारोपः ; यथा — मुखचन्द्रमसोः, गोवाहीकयोः । आरोपविषयस्य

वृक्षादेरारोप्यमाणेन रसादिना सादृश्यमस्ति। असति च सादृश्ये, रसादिशब्दे श्रुते च समारोपं समर्थयन् देवानांप्रिय एव स्यात्।

स्यान्मतम् — तत्क्रियादिसादृश्याद् वृक्षलतादिषु नायकवृत्तान्तमध्यारोप्य तादूप्येणाध्यवसितेषु तेषु तत्रस्थतयैव रसः सन्निवेश्यते, स एव समारोप इति; तर्हि, न रसाभासोऽयम्, अपि तु रस एव। यो यस्याभासः स तु तल्लक्षणरहित इति स्थितिः। तत्र च यथोक्तलक्षण एव रसोऽनुभूयते। कथमस्याभासत्वम्? आभासत्वेन च नायं रस इत्यपि प्रतीतः स्यात्। नचैवम्। तस्मादस्मदुक्त एव रसलक्षणस्यौचित्याख्यस्य विरहाद्रसाभासोऽधिगन्तव्यः। औचित्यलक्षणं तु रसस्योक्तम्।

यथा — अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा॥ इति।

अपि चोक्तम् —
लोके प्रसिद्धमौचित्यं ज्ञातव्यं तत् प्रयत्नतः।
सुजनात् सत्कवेस्तद्ज्ञो रसं पोष्टुं प्रगल्भते॥ इति।

अयं तु विशेषः — क्वचिद्वाच्यतां नीतेन साक्षान्नायकव्यापारेण, क्वचिदन्यत्राध्यारोपितेनार्थशक्तिमूलानुरणनात्तुरूपेण तेन रसो व्यज्यते। एतावता रसस्य कुतो मुख्यामुख्यत्वकल्पना? उभयथापि शब्दार्थव्यङ्ग्यत्वं रसस्य न विशिष्यत एव यतः। किञ्च वाक्यार्थीभूतनायकव्यापाराभिव्यञ्जनादपि रसादध्यारोपितनायकवृत्तान्ताभिव्यक्तो रसोऽनुत्तानतया सचेतसश्चमत्करोतितराम्। उत्तानादप्यनुत्तानस्य लोकोत्तरत्वं प्रसिद्धमेव। यथोक्तम् —

अनुस्पृष्टः शब्दैरपि च घटनास्फुटरसः
पदानामर्थात्मा रसयति न तूत्तानितरसः।
यथा किञ्चित्किञ्चित्पवनचलचीनांशुकतया
कुचाभोगः स्त्रीणां हरति न तथोन्मज्जितवपुः॥

अध्यारोपितनायकव्यापाराभिव्यङ्ग्यो रसो यथा —

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न [1]लक्षितम् ॥

साक्षान्नायकव्यापारव्यङ्ग्यो रसो यथा — "उपोढरागे" त्यत्र । रसस्य प्राधान्यादलङ्कार्यत्वम् ; पूर्ववाक्यार्थाङ्गतया रसवदलङ्कारत्वमित्यनयोर्विवेकः ।

भावस्य शान्तिर्यथा —

तस्यास्सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
माऽऽश्लिष्टा रभसेन तत्सुखवशात्तन्व्यापि तद्विस्मृतम् ॥

अत्र कोपशान्तिः । कोपस्योदयो यथा —

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
माभूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥

अत्रौत्सुक्यस्य सन्धिर्यथा —

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोन्मादश्च मां कर्षतः ।
वैदेहीपरिरम्भ एव च मुहुश्चैतन्यमामीलयन्
[2]आनन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ॥

शबलता यथा —

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणामुपशान्तये श्रुतमहो कोपेऽपि कान्तं मुखम् ।

1. लोकितम् पा० (क)
2. आमोदी पा० (क)

किं वक्ष्यन्त्यपकल्मषाः [1]कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता ।

न एते रसादयो ध्वनौ प्राधान्यादलङ्कार्या एव; गुणीभूता रसाद्यङ्गतया रसवदलङ्कारा इति ।

स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलनेषु बन्धनम् ।
च्युतकेसरदूषितेक्षणान्यवतंसोत्पलताडनानि वा ॥

अत्र करुणस्याङ्गं शृङ्गारः । यथा वा —

दूरे दारुवनाभिमूचकमृषाचाटूनि मुञ्चाधुना
भूयो भूय ( उदीर्यते? ) यदि पुनश्चन्द्रः क्षितिं यास्यति ।
इत्युक्तः शशिमौलिरद्रिसुतया चूडेन्दुभालङ्घन-
व्याजव्यञ्जित ( नैज? ) पादपतनप्रीतप्रियः पातु वः ॥

यथावा —

अम्ब स्तम्बेरमोऽयं क नु खलु गतवानातपत्रेण तातो
मामत्रारोपयेति प्रचुरजलधरं सम्भ्रमं संविलोक्य ।
आकृष्याऽऽकृष्य पीनस्तनतटगलितं वल्कलालीदुकूलं
बालं दृष्ट्वा रुदन्तं विजयति(?) भवने रोदिति त्वद्रिपुस्त्रि (स्त्री?)॥

अत्र राजविषयस्य भावस्य करुणः ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधयः
तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुस्तुतिमिति प्रस्तौमि यावद्भुवः
तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥

अत्र भूमिविषयो भावो राजविषयो रतिभावस्य ।

---

1 सुकृतिनः । पा० (क)

भावोद्भेदादधिकचतुरान् बिभ्रतीं रूपशोभां
वैराक्रान्ते मनसि विफलप्रार्थनाबद्धरोषः ।
बन्दीकर्तुं स्पृशति वनिताशङ्कया केशहस्ते
शून्ये मन्ये त्वदरिनगरे सालभञ्जीं पुलिन्दः ॥

अत्र भावस्य रसाभासः । तत्र —

तातस्ते निगडस्थितः परगृहे प्राप्तावमानावधि-
र्विध्वस्तानि बलानि शुद्धमतयश्शूलाहता मन्त्रिणः ।
अद्यापि स्मितबन्धुरं तव मुखं कष्टं न कोपारुणं
धिक् त्वामित्यभितस्स्त्रिया त्वधिरुषा निर्भर्त्स्यते दारकः ॥

अत्र —

बन्दीकृत्य नृप ! द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
[1]श्लिष्यन्ति प्रणमन्ति [2]यान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपतितो [3]ह्यौचित्यवारान्निधे !
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिस्तूयसे ॥

अत्र भावस्य रसाभासभावाभासौ ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥

अत्र भावस्य प्रशमः ।

साकं कुरङ्गकदृशां मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।

---

1. पश्यन्ति । पा० (क)
2. लान्ति । पा० (क)
3. स्यौचित्य । पा० (ख)

अन्याभिधायि[1] तव नाम विभो! गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥

अत्र त्रासस्योदयः ।

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकश्शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटवटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥

अत्रावेगधैर्ययोस्सन्धिः ।

पश्येत्कश्चिच्चल चपल रे! का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा! व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिबृढ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित्फलकिसलयान्यादादानाऽभिधत्ते ॥

अत्र शङ्कासूयाधृतिमतिश्रमदैन्यादीनां शबलता ।

इति रसविवेकनाम्नि काव्यादर्शे रसभेदविचारो नाम
तृतीय उल्लासः

समाप्तोऽयं ग्रन्थः ।

॥ श्रीरस्तु ॥ शुभमस्तु ॥

---

1 यायि । पा० (ख)

श्रीरस्तु

# अस्मिन् ग्रन्थे समुदाहृतानां गाथानां समीचीनः पाठः, छाया च ।

---

१. ३२ पुटे —

पंथिअ ! ण एत्थ सत्थरमत्थि मणं पत्थरत्थळे गामे ।
उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥

छा ॥ पथिक ! नात्र संस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥

( गाथासप्तशती । काव्यप्रकाशे । ४–५८ )

२. ५७ पुटे —

पणअकुविआणँ दोण्हवि अलिअपसुत्ताणँ माणइत्ताणं ।
णिच्चलणिरुद्धणीसासदिण्णअण्णाणँ को मल्लो ॥

छा ॥ प्रणयकुपितयो र्द्वयोरप्यलीकप्रसुप्तयो र्मानवतोः ।
निश्चलनिरुद्धनिश्वासदत्तकर्णयोः को मल्लः ॥

( गाथासप्तशती । दशरूपके। ४–५८ )

३. ५७ पुटे —

तइआ मह गंडत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एण्हि सच्चेअ अहं ते अ कवोला ण सा दिट्ठी ॥

छा ॥ तदा मम गण्डस्थलनिमग्नां दृष्टिं न नयस्यन्यत्र ।
इदानीं सैवाऽहं तौ च कपोलौ न सा दृष्टिः ॥

( काव्यप्रकाशे । ३–१६ )

४. ५८ पुटे —

ओल्लोल्लकरअरअणक्खएहिँ तुह लोअणेसु मह दिण्णम् ।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिआ ॥

छा ॥ आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम् ।
रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते ॥

( काव्यप्रकाशे । ४–७० )

---

श्रीरस्तु

## अनुबन्धः १.

# रसविवेकगतानां कारिकाणां अकाराद्यनुक्रमणिका

---

श्रीरस्तु

## अनुबन्धः २.

## रसविवेकगतानां उदाहरणानां अकाराद्यनुक्रमेण अनुक्रमाणिका

---

श्रीरस्तु

श्रीमते वेङ्कटेशाय नमः

## अनुबन्धः ३.

## अत्र समुदाहृतानां ग्रन्थानां, ग्रन्थकर्तॄणां, इतरव्यक्तीनां च नामानि

---

श्रीरस्तु

अनुबन्धः ४

## अत्र संवादीकृतानि प्राचीनानां सुभाषितानि

अपि च रसनिरूपणप्रघट्टेषु प्रतिरसं भारतनाट्यशास्त्रनिर्वचनानि संवादाय तत्र तत्र समुद्धृतानि ।



श्रीरस्तु
श्रीमते वेङ्कटेशाय नमः

अनुबन्धः ५.

# शोधनिका

(आकरपाठ – पाठान्तर – शुद्धाशुद्धपाठादि प्रदर्शनात्मिका)

अत्रोदाहृतानां श्लोकानां, संवादिवाक्यानां च तत्तदाकरग्रन्थेषु सुमहान् पाठभेद उपलभ्यते ; मातृकायामुपलब्धा एव पाठा अत्र मुद्रिताः; आकरग्रन्थसंवादीकरणेन उपलब्धाः पाठाः, पाठान्तराणि, अशुद्धयश्च, क्रोडीकृत्यात्र निरूपिताः, प्रामाणिकानां मानसोल्लासाय; येषामनुमोदेन द्वितीयसंस्करणे सम्यग् व्यवस्थापयिष्यन्ते ते पाठाः सधन्यवादसमर्पणम् । सर्वासामपि प्राकृतगाथानां समीचीनः पाठः, छायया सह ८० पृष्ठे निवेशितः ।

| पृष्ठम् | पंक्तिः | मुद्रितपाठः | समीचीनः पाठः |
|---|---|---|---|
| १ | २२ | श्यानन्दूरपरं | श्यानन्दूरपुरं |
| ,, | २५ | तृटितस्य | त्रुटितस्य |
| २ | ८ | संप्रवित्सुभिः | संप्रलिप्सुभिः ? |
| ३ | १४ | यत्पदस्य | * यत्परस्य |
| ३ | १७ | कति संख्यः | कतिसंख्यः |
| ४ | ६ | र्जगत्त्रयतृणीकृत | स्तृणीकृतजगत्त्रय |
| ४ | ७ | कौमारकीट | कौमारकेऽपि |
| ,, | ,, | किमथ एत्युत | किमयमेत्युत |
| ,, | १२ | मावहति । विभा | मावहति विभा |
| ,, | १६ | दोषपसज्ञनं | दोषप्रसज्ञनं |
| ,, | १९ | ग्रहीतृभावात् | ग्रहीत्रभावात् |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः | समीचीनः पाठः |
|---|---|---|---|
| ६ | ३ | परिणामिनी | परिणामीनि |
| ,, | १२ | परसहस्र | परःसहस्र |
| ७ | ६ | तत्तद्विकारस्यप्यमा | तत्तद्विकारस्याप्यमा |
| ,, | १८ | सुखरवभाव | सुखस्वभाव |
| ९ | ११ | दुःखस्यप्युपलब्धेः | दुःखस्याप्युपलब्धेः |
| १० | १३ | स्वाद्यविषया | स्वादविषया |
| ,, | १९ | युक्त्यैवेदं | युक्त्यैवेयं |
| ११ | ५ | निष्पत्तिरिति " | निष्पत्ति " रिति |
| ,, | ७ | पृथङ्गिनिर्देशः | पृथङ्निर्देशः |
| ,, | २१ | अनार्येषु | * अनार्द्रेषु |
| १२ | ७ | मृणाली म्लान | मृणालीम्लान |
| ,, | १० | दन्तछेद | दन्तच्छेद |
| ,, | १३ | दूरादुत्सुक | * एष्यत्युत्सुक |
| ,, | १४ | वास्पाम्बु | बाष्पाम्बु |
| ,, | २१ | विभावानुभाव्य | विभावानुभावव्य |
| १३ | ५ | विभाममा | विभावमा |
| ,, | ७ | अनुभावव्यभि | अनुभावा व्याभि |
| ,, | १६ | विशेषण | विशेषेण |
| ,, | २० | लुनोते | लुनीते |
| १४ | ८ | निरुपपादः | निरपवादः |
| १५ | २ | विभावप्रधानं | विभावप्राधान्यम् |
| ,, | ७ | अनुभावप्रधानं | अनुभावप्राधान्यम् |
| ,, | १५ | स्योपकाग़े | स्योपकारे |

| पृष्ठम् | पंक्तिः | मुद्रितपाठ | समीचीनः पाठः |
|---|---|---|---|
| १५ | २२ | मुत्क्षितुम् | मुक्षितुम् |
| १६ | २ | न स्थेमनी | निःस्थेमनी |
| ,, | १० | लोकप्रभाव | लोकस्वभाव |
| ,, | ,, | यात्रानुगामिनः | * यात्रानुयायिनः |
| ,, | ११ | भरत VI. | भरत ७-६. |
| ,, | १९ | विज्ञात्तार्थः | विज्ञानार्थः |
| १७ | ८ | उददीपदिन्दु | अदिदीपदिन्दु |
| ,, | ,, | मित्रमत्रेर्नयन | मत्रिनयन |
| ,, | ९ | का णादुत्प | कारणादुत्प |
| ,, | १८ | नयेनैव यस्मात्त्वर्थो | = नयेनेह यतस्त्वर्थो |
| ,, | १९ | शाखाङ्गोपाङ्ग | वाग्ङ्गोपाङ्ग |
| ,, | २२ | प्राप्तविस्तार | = प्रान्तविस्तार |
| १९ | ६ | त्रीयन्तः | त्रयन्तः |
| २२ | ३ | ह्यप्रयोगेऽपि | ह्यप्रयोगे |
| २३ | ३ | प्रतीयन्ते | प्रतीयते |
| २४ | २ | निमित्तेति रसा | निमित्तेति, रसा |
| ,, | ,, | वाच्यत्वम्, दुष्ट | वाच्यत्वंदुष्ट |
| ,, | २४ | प्रथन छेदा | प्रथनच्छेदा |
| २५ | १७ | विरहव्यथेव | = विरहव्यथैव |
| २६ | १४ | वाच्यप्रकरण | वाच्या प्रकरण |
| ,, | १५ | वाक्यार्थैः | वाक्यार्थः |
| ,, | ,, | कारकैर्यद्वा | कारकैर्युक्ता |
| ,, | १७ | दानाद्बुद्धि | = दानात् प्रकरणादिवशाद्बुद्धि |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः | समीचीनः पाठः |
|---|---|---|---|
| २६ | १८ | कारकोपहता | * कारकोपचिता |
| ,, | ,, | कव्यैष्वपि | काव्येष्वपि |
| ,, | १९ | " क्वचित्प्रीत्यै | क्वचित् " प्रीत्यै |
| ,, | ,, | इत्येवमादौ | इत्येवमादौ, |
| ,, | ,, | विभावनियतानियत | = नियताविहित |
| ,, | २० | रत्यादिस्थाय्यात्मा | = रत्यादिः स्थायी |
| ,, | २१ | तच्छब्दोपनीतैः | = तत्तच्छब्दोपनीतैः |
| २७ | १० | पदार्था न थ | पदार्थानथ |
| ,, | २५ | मुङ्क्थाः | मुङ्क्थाः |
| २८ | ४ | विप्रियतां | विप्रियताम् |
| ,, | ,, | सं विप्रियतां | संप्रियताम् |
| ,, | ७ | विभा दिवैय्यर्था | विभावादिवैयर्थ्यम् |
| २८ | १८ | वर्तमानत्वदात्व | वर्तमानाच्चदात्व |
| ,, | ,, | स्थायिन एव रसत्व | स्थायिनो रसत्व |
| ३१ | १९ | त्वमसि | त्वामसि |
| ३२ | १७ | शबलतादि रसा | शबलतादि । रसा |
| ,, | ,, | हरिप्यन्ते | हरिष्यन्ते |
| ३३ | ८ | तं सन्तो | तं सन्तं |
| ,, | १४ | विसर्पत्यवि | विसर्पन्नवि |
| ,, | १६ | प्रत्यङ्गज्वर | प्रत्यङ्गं ज्वर |
| ३२ | १९ | तच्चेष्ठानु | तच्चेष्टानु |
| ,, | २२ | गृह्णति | गृह्णाति |
| ३५ | ३ | चर्वणीयत्वं | चर्वणीयत्वम् |

| पंक्तिः | मुद्रितपाठः | समीचीनः पाठः |
|---|---|---|
| ४ | अत्र "रसिकानां" इत्याधिकम् | |
| ,, | संयुक्तस्यैव | संयुक्तस्येव |
| २ | उल्लङ्घन क्रम | उल्लङ्घनक्रम |
| १० | बाह्यविषय | बाह्यकरण |
| १२ | इत्युक्तेरप्यत्रापि | इत्युक्तेरत्रापि |
| १९ | समाधिस्सा | ममाधिस्स |
| २३ | अतस्तत्र विरहात् | अतस्तत्र वृत्तिविरहात् |
| १७ | नो दुःखमिति | = वा दुःखमिति |
| २२ | यदाश्रयो अन्यै | यदाश्रयोऽन्यै |
| ४ | वासनं भावन | वासनं भवन |
| ६ | प्रत्येतव्यत्वं | प्रत्येतव्यत्वम् |
| ३ | ज्ञानचक्षुषा सक्षात् | ज्ञानचक्षुषा ; साक्षाद्वा |
| ४ | प्रतिछन्द | प्रतिच्छन्द |
| ७ | उ स्थापयन्ति | उपस्थापयन्ति |
| १५ | मृन्मयैर्ध्य | मृण्मयैर्य |
| २२ | विवृद्धिर्बिभ्र | विवृद्धिं बिभ्र |
| २१ | आशिवादधि | आशिवादथ |
| १६ | अन्योयसङ्क | अन्योन्यसङ्क |
| १७ | तुल्याधिकर | तुल्याधिकरण |
| २५ | नाट्यरसाः | = नाट्ये रसाः |
| ६ | मुच्च्छेत्तु | मुच्छेत्तु |
| ,, | देयत्वेऽत्युपा | देयत्वेऽप्युपा |
| १६ | निर्वेदस्याव | निर्वेदः स्याव |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः | समीचीनः पाठः |
|---|---|---|---|
| ४३ | १९ | न्यस्तं | = दत्तम् |
| ,, | २१ | कल्पस्थितैस्तनु | = कल्पं स्थितं तनु |
| ४४ | ६ | तत्प्रतिबन्धस्य आस्वादः | तत्प्रतिबन्धस्समास्वादः |
| ,, | १० | इति यदुक्तम् | इति । यदुक्तम् |
| ,, | १५ | विधातुः शुश्रू | विधातुं शुश्रू |
| ,, | २१ | जीमुतवाहन | जीमूतवाहन |
| ४५ | ९ | वर्तते | वर्तसे |
| ,, | १० | रामगतो | राम ! गतो |
| ४८ | ७ | रसोऽङ्गीकर्तव्यो | रसोऽङ्गी कर्तव्यो |
| ,, | २२ | आश्रयैक्यविरु | = आश्रयैक्ये विरु |
| ,, | २५ | रसाभासाच्च | रसाभासत्वाच्च |
| ,, | २६ | सान्तरव्यवधि | रसान्तरव्यवधि |
| ४९ | २ | यद्रसान्तरौ | यद्रासान्तरे |
| ५० | २ | परश्रृङ्गार | परः श्रृङ्गारी |
| ,, | ,, | "दत्तानि वध्वाल" – इति –– अस्य कुण्डलीकरणे अन्वयो भवति। | |
| ,, | ४ | सदर्भस्थली: | सदर्भाः स्थली: |
| ,, | २६ | धृति चिन्तानां | धृतिचिन्तानां |
| ५१ | ९ | कालवर्षभोगादि | कालवेषभोगादि |
| ,, | १० | चेष्टितः | चेष्टितैः |
| ५३ | ६ | अमी च | = अमी हि |
| ,, | ७ | श्रयाद्द्वैध | श्रयाद्वैत |
| ,, | १७ | गुरुभ्योऽर्पि | गुरुष्वर्पि |
| ,, | १९ | व्रजति | = भजति |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः | समीचीनः पाठः |
|---|---|---|---|
| ,, | २० | तथा | तया |
| ,, | २२ | चञ्चुर्मकुलिनि | चञ्चुं मुकुलिनि |
| ५४ | ३ | कोकी | कोकः |
| ,, | १९ | ऽति चित्तकृत् | ऽतिचित्तकृत |
| ,, | २१ | शेषामूर्तिः | शेषा मूर्तिः |
| ५५ | ८ | चलयत्यसौ | चलत्यसौ |
| ,, | १४ | च लसद्धासो | च चलद्धासो |
| ५६ | ८ | ग्रीवादृशौ | = ग्रीवं दृशौ |
| ,, | १५ | विकीर्णोऽधरो | = विकीर्णाधरो |
| ,, | २० | तारकाधर | तारकाऽधर |
| ५७ | २ | "यावत्प्रत्युज्जीवने" त्यादि पंक्तिरनन्विता वर्तते । "यावत्प्रत्युज्जीवनसंभावना नास्ति, तावत् करुण एव रसः" इति समीचीनः पाठः स्यादिति प्रतिभाति । | |
| ५८ | २२ | आस्नैस्ताव | अस्नैस्ताव |
| ५९ | ४ | दृष्ट्या | = धृत्या |
| ,, | ,, | पुरा | = पुरः |
| ,, | ६ | जीवितप्रिय | जीवित प्रिय |
| ,, | ,, | सुहृत्सार्धं | सुहृत्सार्थः |
| ,, | १९ | प्लवान्तर्व्यसन | प्लवान्तं व्यसन |
| ,, | २० | दिवाकरस्य | * दिवातनस्य |
| ,, | २५ | कल्प्याभिरङ्ग | क्रव्याद्भिरङ्ग |
| ६० | ४ | संभोगाय | = संभोगोऽयं |
| ६५ | ६ | स्थितिधैर्य | = स्मृतिधैर्य |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः | समीचीनः पाठः |
|---|---|---|---|
| ६६ | १० | यार्थमुक्तं | यार्थयुक्तं |
| ,, | ,, | सम्भवति | = विज्ञेयः |
| ,, | १३ | ग्रहणोल्लसनैः | = ग्रहोत्कहसनैः |
| ,, | २१ | क्षोभगोऽशुद्धादु | = क्षोभजः शुद्ध उ |
| ,, | ,, | द्वितीयकः | = तृतीयकः |
| ,, | २२ | क्षोभणो | = क्षोभजो |
| ६७ | १२ | रुधिराद्रकीकस | रुधिरान्त्रकीकस |
| ,, | १३ | कृतः | = वृतः |
| ,, | १४ | वेगो विशङ्का | वेगार्तिशङ्का |
| ६९ | २४ | शस्त्रप्रहारताडनघनविच्छेद | = सत्त्वप्रहारघातनविकृतच्छेदन |
| ,, | २५ | संभ्रमार्थैः | संभ्रमोत्थैः |
| ७० | २ | प्रहरणमोक्षैः | = प्रहरणसंकुल |
| ,, | २२ | सस्वनरुदितैः | = श्वसनरुदितैः |
| ,, | ,, | मोहाद्यैः परिदेवितैः | = मोहोद्गमैश्च |
| ७१ | १९ | दीप्तात्म | दीप्तचात्म |




N. B:— * पाठान्तरम् ; = आकरपाठः ; अचिह्निताः शुद्धपाठाः ।